तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनम् ।
लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १० ॥

ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् ।
सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११ ॥

स ददर्श ततः सालमविदूरे हरीश्वरः ।
सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२ ॥

तस्यैकां पर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम् ।
सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥

तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् ।
सालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४ ॥

सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा ।
फलपुष्पसमाकीर्णे तस्मिन् गिरिवरोत्तमे ॥ १५ ॥

ततः प्रहृष्टः सुग्रीवः श्लक्ष्णया शुभया गिरा ।
उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥ १६ ॥

अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः ।
ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७ ॥

सोऽहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः ।
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ॥ १८ ॥

वालिनो मे भयार्तस्य सर्वलोकाभयङ्कर ।
ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥ १९ ॥

एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ।
प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ २० ॥

उपकारफलं मित्रमपकारोऽरिलक्षणम् ।
अद्यैव तं हनिष्यामि तव भार्यापहारिणम् ॥ २१ ॥

इमे हि मे महाभाग पत्रिणस्तिग्मतेजसः ।
कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२ ॥

कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः ।
सुपर्वाणः सुतीक्ष्णाग्राः सरोषा भुजगा इव ॥ २३ ॥

भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम् ।
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४ ॥

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २५ ॥

राम शोकाभिभूतोऽहं शोकार्तानां भवान् गतिः ।
वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६ ॥

त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम् ।
कृतः प्राणैर्बहुमतः सत्येनापि शपाम्यहम् ॥ २७ ॥

वयस्य इति कृत्वा च विस्रब्धः प्रवदाम्यहम् ।
दुःखमन्तर्गतं यन्मे मनो दहति नित्यशः ॥ २८ ॥

एतावदुक्त्वा वचनं बाष्पदूषितलोचनः ।
बाष्पोपहतया वाचा नोच्चैः शक्नोति भाषितुम् ॥ २९ ॥

बाष्पवेगं तु सहसा नदीवेगमिवागतम् ।
धारयामास धैर्येण सुग्रीवो रामसन्निधौ ॥ ३० ॥

संनिगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे ।
विनिश्वस्य च तेजस्वी राघवं पुनरब्रवीत् ॥ ३१ ॥

पुराऽहं वालिना राम राज्यात्स्वादवरोपितः ।
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ॥ ३२ ॥

हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी ।
सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३ ॥

यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव ।
बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥

शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि राघव ।
नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ॥ ३५ ॥

केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे ।
अतोऽहं धारयाम्यद्य प्राणान्कृच्छ्रगतोऽपि सन् ॥ ३६ ॥

एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः ।
सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ॥ ३७ ॥

संक्षेपस्त्वेष मे राम किमुक्त्वा विस्तरं हि ते ।
स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ॥ ३८ ॥

तद्विनाशाद्धि मे दुःखं प्रनष्टं स्यादनन्तकम् ।
सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९ ॥
एष मे राम शोकान्तः शोकार्तेन निवेदितः ।
दुःखितोऽदुःखितो वाऽपि सख्युर्नित्यं सखा गतिः
श्रुत्वैतच्च वचो रामः सुग्रीवमिदमब्रवीत् ।
किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१ ॥
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर ।
आनन्तर्यं विधास्यामि संप्रधार्य बलाबलम् ॥ ४२ ॥
बलवान्हि ममामर्षः श्रुत्वा त्वामवमानितम् ।
वर्धते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३ ॥
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः ।
सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ॥ ४४ ॥
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ।
प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५ ॥
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ।
वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे अष्टमः सर्गः ॥

आदितः श्लोकाः 9637 किष्किन्धाकाण्डे आदितः श्लोकाः 385

इति पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे गीते
श्रीमद्रामायणे त्रयोदशेऽह्नि वर्तमानकथाप्रसङ्गः

[पुरा कुशलवाभ्यां श्रीरामसन्निधौ अश्वमेधयज्ञवाटे
चतुर्दशेऽह्नि किष्किन्धाकाण्डे नवमसर्गादारभ्य
एकोनत्रिंशसर्गपर्यन्तं (9638—10513 श्लोकाः)
गीतम्। तस्मिन् दिने गीताः श्लोकाः 876.]

नवमः सर्गः ॥ ९ ॥

वैरकारणकथनम् ॥

श्रूयतां राम यद्वृत्तमादितः प्रभृति त्वया ।
यथा वैरं समुद्भूतं यथा चाहं निराकृतः ॥ १ ॥

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः ।
पितुर्बहुमतो नित्यं मम चापि तथा पुरा ॥ २ ॥

पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः ।
कपीनामीश्वरो राज्ये कृतः परमसंमतः ॥ ३ ॥

राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ।
अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ॥ ४ ॥

मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः ।
तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ॥ ५ ॥

स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ।
नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ६ ॥

प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम् ।
श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ७ ॥

स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् ।
वार्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ८ ॥

स तु निर्धूय सर्वान्नो निर्जगाम महाबलः ।
ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ९ ॥

स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् ।
असुरो जातसंत्रासः प्रदुद्राव ततो भृशम् ॥ १० ॥

तस्मिन्द्रवति सन्त्रस्ते ह्यावां द्रुततरं गतौ ।
प्रकाशो हि कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥ ११ ॥

स तृणैरावृतं दुर्गं धरण्या विवरं महत् ।
प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥ १२ ॥

तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः ।
मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः ॥ १३ ॥

इह तिष्ठाद्य सुग्रीव बिलद्वारि समाहितः ।
यावदत्र प्रविश्याहं निहन्मि समरे रिपुम् ॥ १४ ॥

मया त्वेतद्वचः श्रुत्वा याचितः स परन्तपः ।
शापयित्वा तु मां पद्भ्यां प्रविवेश बिलं ततः ॥ १५ ॥

तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः ।
स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ॥ १६ ॥

अहं तु नष्टं तं ज्ञात्वा स्नेहादागतसंभ्रमः ।
भ्रातरं हि न पश्यामि पापाशङ्कि च मे मनः ॥ १७ ॥

अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम् ।
सफेनं रुधिरं रक्तमहं दृष्ट्वा सुदुःखितः ॥ १८ ॥

नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः ।
निरस्तस्य च संग्रामे क्रोशतो निःस्वनो गुरोः ॥ १९ ॥

अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ॥ २० ॥

गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ।
ततोऽहं तैः समागम्य संमतैरभिषेचितः ॥ २१ ॥

राज्यं प्रशासतस्तस्य न्यायतो मम राघव ।
आजगाम रिपुं हत्वा दानवं स तु वानरः ॥ २२ ॥

अभिषिक्तं तु मां दृष्ट्वा वाली संरक्तलोचनः ।
मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥ २३ ॥

निग्रहे च समर्थस्य तं पापं प्रति राघव ।
न प्रावर्तत मे बुद्धिर्भ्रातुर्गौरवयन्त्रिता ॥ २४ ॥

हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ।
मानयंस्तं महात्मानं यथावच्चाभ्यवादयम् ॥ २५ ॥

उक्ताश्च नाशिषस्तेन सन्तुष्टेनान्तरात्मना ॥ २६ ॥

नत्वा पादावहं तस्य मकुटेनास्पृशं प्रभो ।
अपि वाली मम क्रोधान्न प्रसादं चकार सः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे नवमः सर्गः ॥

आदितः श्लोकाः **9664** किष्किन्धाकाण्डे आदितः श्लोकाः **412**

दशमः सर्गः ॥ १० ॥

सुग्रीवस्य राज्यान्निर्वासनम् ॥

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् ।
अहं प्रसादयांचक्रे भ्रातरं प्रियकाम्यया ॥ १ ॥

दिष्ट्याऽसि कुशली प्राप्तो निहतश्च त्वया रिपुः ।
अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः ॥ २ ॥

इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् ।
छत्रं सवालव्यजनं प्रतीच्छस्व मयोद्यतम् ॥ ३ ॥

आर्तश्चाथ बिलद्वारि स्थितः संवत्सरं नृप ।
दृष्ट्वाऽहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥

शोकसंरक्तनयनो भृशं व्याकुलितेन्द्रियः ।
अपिधाय बिलद्वारं शैलशृङ्गेण तत्तथा ॥
तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः ॥ ५ ॥

विषादान्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ।
अभिषिक्तो न कामेन तन्मे त्वं क्षन्तुमर्हसि ॥ ६ ॥

त्वमेव राजा मानार्हः सदा चाहं यथापुरम् ।
राजभावनियोगोऽयं मया त्वद्विरहात्कृतः ॥ ७ ॥

सामात्यपौरनगरं स्थितं निहतकण्टकम् ।
न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ॥ ८ ॥

मा च रोषं कृथाः सौम्य मयि शत्रुनिबर्हण ॥ ९ ॥

याचे त्वां शिरसा राजन्मया बद्धोऽयमञ्जलिः ॥ १० ॥

बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः ।
राजभावे नियुक्तोऽहं शून्यदेशजिगीषया ॥ ११ ॥

स्निग्धमेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः ।
धिक्त्वामिति च मामुक्त्वा बहु तत्तदुवाच ह ॥ १२ ॥

प्रकृतीश्च समानीय मन्त्रिणश्चैव सम्मतान् ।
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ॥ १३ ॥

विदितं वो यथा रात्रौ मायावी स महासुरः ।
मां समाह्वयत क्रूरो युद्धकाङ्क्षी सुदुर्मतिः ॥ १४ ॥

तस्य तद्भाषितं श्रुत्वा निःसृतोऽहं नृपालयात् ।
अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः ॥ १५ ॥

स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ।
प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां समनुद्रुतौ ॥ १६ ॥

अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १७ ॥

तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् ।
अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १८ ॥

अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् ।
बिलद्वारि प्रतीक्षस्व यावदेनं निहन्म्यहम् ॥ १९ ॥

स्थितोऽयमिति मत्वा तु प्रविष्टोऽहं दुरासदम् ।
तं मे मार्गयतस्तत्र गतः संवत्सरस्तदा ॥ २० ॥

स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः ।
निहतश्च मया तत्र सोऽसुरो बन्धुभिः सह ॥ २१ ॥

तस्यैव च प्रवृत्तेन रुधिरौघेण तद्बिलम् ।
पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २२ ॥

सूदयित्वा तु तं शत्रुं बलिनं दुन्दुभेः सुतम् ।
निष्क्रामन्नैव पश्यामि बिलस्य पिहितं मुखम् ॥ २३ ॥

विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः ।
यतः प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २४ ॥

पादप्रहारैस्तु मया बहुभिः स विदारितः ।
ततोऽहं तेन निष्क्रम्य यत्नात्पुनरुपागतः ॥ २५ ॥

तत्रानेनास्मि संरुद्धो राज्यं प्रार्थयताऽऽत्मनः ।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २६ ॥

एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः ।
तदा निर्वासयामास वाली विगतसाध्वसः ॥ २७ ॥

तेनाहमपविद्धश्च हृतदारश्च राघव ।
तद्भयाच्च मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २८ ॥

ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः ।
प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २९ ॥

एतत्ते सर्वमाख्यातं वैरानुकथनं महत् ।
अनागसा मया प्राप्तं व्यसनं पश्य राघव ॥ ३० ॥

वालिनस्तु भयार्तस्य सर्वभूतभयापह ।
कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥ ३१ ॥

एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मसंहितम् ।
वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३२ ॥

अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ।
तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥ ३३ ॥

यावत्तं नहि पश्यामि तव भार्यापहारिणम् ।
तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः ॥ ३४ ॥

आत्मानुमानात्पश्यामि मग्नस्त्वं शोकसागरे ।
त्वामहं तारयिष्यामि सुखं प्राप्स्यसि पुष्कलम् ॥ ३५ ॥

तस्य तद्वचनं श्रुत्वा हर्षपौरुषवर्द्धनम् ।
सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत् ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे दशमः सर्गः ॥

आदितः श्लोकाः 9700 किष्किन्धाकाण्डे आदितः श्लोकाः 448

## एकादशः सर्गः ॥ ११ ॥

वालिपराक्रमवर्णनम् ॥

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ।
सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥ १ ॥

असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः ।
त्वं दहेः कुपितो लोकान्युगान्त इव भास्करः ॥ २ ॥

वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या ।
तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३ ॥

समुद्रात्पश्चिमात्पूर्वं दक्षिणादपि चोत्तरम् ।
क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४ ॥

अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ।
ऊर्ध्वमुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥

बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
वालिना तरसा भग्ना बलं प्रथयताऽऽत्मनः ॥ ६ ॥

महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः ।
बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७ ॥

स वीर्योत्सेकदुष्टात्मा वरदानाच्च मोहितः ।
जगाम सुमहाकायः समुद्रं सरितां पतिम् ॥ ८ ॥

ऊर्मिमन्तमतिक्रम्य सागरं रत्नसञ्चयम् ।
मह्यं युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९ ॥

ततः समुद्रो धर्मात्मा समुत्थाय महाबलः ।
अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १० ॥

समर्थो नास्मि ते दातुं युद्धं युद्धविशारद ।
श्रूयतां त्वभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११ ॥

शैलराजो महारण्ये तपस्विशरणं परम् ।
शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२ ॥

गुहाप्रस्रवणोपेतो बहुकन्दरनिर्झरः ।
स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥ १३ ॥

तं भीत इति विज्ञाय समुद्रमसुरोत्तमः ।
हिमवद्वनमागच्छच्छरश्चापादिव च्युतः ॥ १४ ॥

ततस्तस्य गिरेः श्वेता गजेन्द्रविपुलाः शिलाः ।
चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ १५ ॥

ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः ।
हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६ ॥

क्लेष्टुमर्हसि मां न त्वं दुन्दुभे धर्मवत्सल ।
रणकर्मस्वकुशलस्तपस्वी शरणो ह्यहम् ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः ।
उवाच दुन्दुभिर्वाक्यं क्रोधात्संरक्तलोचनः ॥ १८ ॥

यदि युद्धेऽसमर्थस्त्वं मद्भयाद्वा निरुद्यमः ।
तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सतः ॥ १९ ॥

हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः ।
अनुक्तपूर्वं धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ २० ॥

वाली नाम महाप्राज्ञः शक्रपुत्रः प्रतापवान् ।
अध्यास्ते वानरः श्रीमान्किष्किन्धामतुलप्रभाम् ॥ २१ ॥

स समर्थो महाप्राज्ञस्तव युद्धविशारदः ।
द्वन्द्वयुद्धं महद्दातुं नमुचेरिव वासवः ॥ २२ ॥

तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि ।
स हि दुर्मर्षणो नित्यं शूरः समरकर्मणि ॥ २३ ॥

श्रुत्वा हिमवतो वाक्यं क्रोधाविष्टः स दुन्दुभिः ।
जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ २४ ॥

धारयन्माहिषं रूपं तीक्ष्णशृङ्गो भयावहः ।
प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २५ ॥

ततस्तद्द्वारमागम्य किष्किन्धाया महाबलः ।
ननर्द कम्पयन्भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २६ ॥

समीपजान्द्रुमान्भञ्जन्वसुधां दारयन्खुरैः ।
विषाणेनोल्लिखन्दर्पात्तद्द्वारं द्विरदो यथा ॥ २७ ॥

अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ २८ ॥

मितं व्यक्ताक्षरपदं तमुवाचाथ दुन्दुभिम् ।
हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९ ॥

किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसि ।
दुन्दुभे विदितो मेऽसि रक्ष प्राणान्महाबल ॥ ३० ॥

तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः ।
उवाच दुन्दुभिर्वाक्यं क्रोधात्संरक्तलोचनः ॥ ३१ ॥

न त्वं स्त्रीसन्निधौ वीर वचनं वक्तुमर्हसि ।
मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२ ॥

अथवा धारयिष्यामि क्रोधमद्य निशामिमाम् ।
गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ३३ ॥

दीयतां संप्रदानं च परिष्वज्य च वानरान् ।
सर्वशाखामृगेन्द्रस्त्वं संसादय सुहृज्जनान् ॥ ३४ ॥

सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे ।
क्रीडस्व च सह स्त्रीभिरहं ते दर्पनाशनः ॥ ३५ ॥

यो हि मत्तं प्रमत्तं वा सुप्तं वा व्यथितं भृशम् ।
हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६ ॥

स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरोत्तमम् ।
विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७ ॥

मत्तोऽयमिति मा मंस्था यद्यभीतोऽसि संयुगे ।
मदोऽयं संप्रहारेऽस्मिन्वीरपानं समर्थ्यताम् ॥ ३८ ॥

तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् ।
पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९ ॥

विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसन्निभम् ।
आविध्यत तदा वाली विनदन् कपिकुञ्जरः ॥ ४० ॥

वाली व्यापादयाञ्चक्रे ननर्द च महास्वनम् ॥ ४१ ॥

तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः ।
युद्धं समभवद् घोरं दुन्दुभेर्वानरस्य च ॥ ४२ ॥

अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिश्चैव शिलाभिः पादपैस्तथा ॥ ४३ ॥

परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा ।
आसीद्दीनोऽसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४४ ॥

व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः ।
तं तु दुन्दुभिमुत्पाट्य धरण्यामभ्यपातयत् ॥ ४५ ॥

युद्धे प्राणहरे तस्मिन्निष्पिष्टो दुन्दुभिस्तदा ।
स्रोतोभ्यो बहु रक्तं तु तस्य सुस्राव पात्यतः ॥
पपात च महाकायः क्षितौ पञ्चत्वमागतः ॥ ४६ ॥

तस्मिन्पञ्चत्वमापन्ने वाली क्रोधेन चान्वितः ।
तत्कायं लोष्टवत्क्षेप्तुमारब्धो वीर्यवांस्तदा ॥ ४७ ॥

तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ।
चिक्षेप वेगवान्वाली वेगेनैकेन योजनम् ॥ ४८ ॥

तस्य वेगप्रविद्धस्य वक्त्रात्क्षतजबिन्दवः ।
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ॥ ४९ ॥

तान्दृष्ट्वा पतितांस्तत्र मुनिः शोणितविप्रुषः ।
क्रुद्धस्तत्र महाभागश्चिन्तयामास को न्वयम् ॥ ५० ॥

येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ।
कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ॥ ५१ ॥

इत्युक्त्वाऽथ विनिष्क्रम्य ददर्श मुनिपुङ्गवः ।
महिषं पर्वताकारं गतासुं पतितं भुवि ॥ ५२ ॥

स तु विज्ञाय तपसा वानरेण कृतं हि तत् ।
उत्ससर्ज तदा शापं क्षेप्तारं वालिनं प्रति ॥ ५३ ॥

इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ।
वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः ॥
सम्भग्नाः पादपाश्चेमे क्षिपतेहासुरीं तनुम् ॥ ५४ ॥

समन्ताद्योजनं पूर्णमाश्रमं मामकं यदि ।
आक्रमिष्यति दुर्बुद्धिर्व्यक्तं स न भविष्यति ॥ ५५ ॥

ये चास्य सचिवाः केचित् संश्रिता मामकं वनम् ।
न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५६ ॥

यदि तेऽपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् ।
वनेऽस्मिन्मामके नित्यं पुत्रवत्परिरक्षिते ॥
पत्राङ्कुरविनाशाय फलमूलाभवाय च ॥ ५७ ॥

दिवसश्चाद्य मर्यादा यं द्रष्टा श्वोऽस्मि वानरम् ।
बहुवर्षसहस्राणि स वै शैलो भविष्यति ॥ ५८ ॥

ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् ।
निश्चक्रमुर्वनात्तस्मात्तान्दृष्ट्वा वालिरब्रवीत् ॥ ५९ ॥

किं भवन्तः समस्ताश्च मतङ्गवनवासिनः ।
मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ॥ ६० ॥

ततस्ते कारणं सर्वं तदा शापं च वालिनः ।
शशंसुर्वानराः सर्वे वालिने हेममालिने ॥ ६१ ॥

एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् ।
तं महर्षिं समासाद्य याचते स्म कृताञ्जलिः ॥ ६२ ॥

महर्षिस्तमनादृत्य प्रविवेश स्वमाश्रमम् ॥ ६३ ॥

शापकारणभीतस्तु वाली विह्वलतां गतः ॥ ६४ ॥

ततः शापभयाद्भीत ऋश्यमूकं महागिरिम् ।
प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वाऽपि नरेश्वर ॥ ६५ ॥

तस्याप्रवेशं ज्ञात्वाऽहमिदं राम महावनम् ।
विचरामि सहामात्यो विषादेन च वर्जितः ॥ ६६ ॥

एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते ।
वीर्योत्सेकान्निरस्तस्य गिरिकूटनिभो महान् ॥ ६७ ॥

इमे च विपुलाः सालाः सप्त शाखावलम्बिनः ।
यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ ६८ ॥

एतदस्यासमं वीर्यं मया राम प्रकीर्तितम् ॥ ६९ ॥

कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ॥ ७० ॥

तथा ब्रुवाणं सुग्रीवं प्रहसंल्लक्ष्मणोऽब्रवीत् ।
कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् ॥ ७१ ॥

तमुवाचाथ सुग्रीवः सप्त सालानिमान्पुरा ।
एवमेकैकशो वाली विव्याथाथ स चासकृत् ॥ ७२ ॥

रामो निर्दारयेदेषां बाणेनैकेन च द्रुमम् ।
वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ॥ ७३ ॥

हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण ।
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते ॥ ७४ ॥

एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलोचनम् ।
ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ॥ ७५ ॥

शूरश्चासुरघाती च प्रख्यातबलपौरुषः ।
बलवान्वानरो वाली संयुगेष्वपराजितः ॥ ७६ ॥

दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि ।
यानि संचिन्त्य भीतोऽहमृश्यमूकं समाश्रितः ॥ ७७ ॥

तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् ।
विचिन्तयन्न मुञ्चामि ऋश्यमूकमहं त्विमम् ॥ ७८ ॥

उद्विग्नः शङ्कितश्चापि विचरामि महावने ।
अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः ॥ ७९ ॥

उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल ।
त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ ८० ॥

किं तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः ।
अप्रत्यक्षं तु मे वीर्यं समरे तव राघव ॥ ८१ ॥

न खल्वहं त्वां तुलये नावमन्ये न भीषये ।
कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम ॥ ८२ ॥

कामं राम भवद्वाणी प्रमाणं धैर्यमाकृतिः ।
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ॥ ८३ ॥

तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ।
स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः ॥ ८४ ॥

यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर ।
प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ॥ ८५ ॥

एवमुक्त्वा तु सुग्रीवं सान्त्वं लक्ष्मणपूर्वजः ।
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन तोलयन् ॥
पुनश्च लीलया रामश्चिक्षेप दशयोजनम् ॥ ८६ ॥

असुरस्य तनुं शुष्कां पादाङ्गुष्ठेन वीर्यवान् ।
क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् ॥ ८७ ॥

लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ ८८ ॥

आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे ।
लघुः संप्रति निर्मांसस्तृणभूतश्च राघव ॥ ८९ ॥

परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा ।
क्षिप्तमेवं प्रहर्षेण भवता रघुनन्दन ॥
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाऽधिकम् ॥ ९० ॥

आर्द्रं शुष्कमिति ह्येतत्सुमहद्राघवान्तरम् ।
स एव संशयस्तात तव तस्य च यद्बले ॥ ९१ ॥

सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले ॥ ९२ ॥

कृत्वेदं कार्मुकं सज्यं हस्तिहस्तमिवाततम् ।
आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ९३ ॥

इमं हि सालं प्रहितस्त्वया शरो
न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं
कुरुष्व राजात्मज शापितो मया ॥ ९४ ॥

यथा हि तेजःसु वरः सदा रवि-
र्यथा हि शैलो हिमवान्महाद्रिषु ।
यथा चतुष्पात्सु च केसरीवर-
स्तथा नराणामसि विक्रमे वरः ॥ ९५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकादशः सर्गः ॥

आदितः श्लोकाः 9795 किष्किन्धाकाण्डे आदितः श्लोकाः 543

## द्वादशः सर्गः ॥ १२ ॥

### सुग्रीवप्रत्यायनम् ॥

एतच्च वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १ ॥

स गृहीत्वा धनुर्घोरं शरमेकं च मानदः ।
सालमुद्दिश्य चिक्षेप ज्यास्वनैः पूरयन्दिशः ॥ २ ॥

स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः ।
भित्त्वा सालान्गिरिप्रस्थे सप्त भूमिं विवेश ह ॥ ३ ॥

प्रविष्टस्तु मुहूर्तेन धरां भित्त्वा महाजवः ।
निष्पत्य च पुनस्तूर्णं स्वतूणीं पुनराविशत् ॥ ४ ॥

तान्दृष्ट्वा सप्त निर्भिन्नान्सालान्वानरपुङ्गवः ।
रामस्य शरवेगेन विस्मयं परमं गतः ॥ ५ ॥

अहो शरनिपातेन रामस्याक्लिष्टकर्मणः ।
यदगण्यापदो ह्येष मृत्युपाशवशं गतः ॥ ६ ॥

विस्मयन्ते च ते सर्वे हनुमत्प्रमुखास्तदा ।
सुग्रीवो राघवं भूयः प्रशशंस कृताञ्जलिः ॥ ७ ॥

अद्य मे सफलं जन्म अद्य मे सफलं श्रमः ।
अद्य मे निहतः शत्रुः स्वराज्येऽवस्थितो ह्यहम् ॥ ८ ॥

सेन्द्रानपि सुरान्सर्वांस्त्वं बाणैः पुरुषर्षभ ।
समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ॥ ९ ॥

येन सप्त महासाला गिरिर्भूमिश्च दारिताः ।
बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ॥ १० ॥

अद्य मे विगतः शोकः प्रीतिरद्य परा मम ।
सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ ११ ॥

तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् ।
वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥ १२ ॥

ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् ।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ १३ ॥

अस्माद्गच्छाम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः ।
गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ॥ १४ ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् ।
वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १५ ॥

सुग्रीवो व्यनदद्घोरं वालिनो ह्वानकारणात् ।
गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १६ ॥

तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः ।
निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव ॥ १७ ॥

ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् ।
गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १८ ॥

तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥ १९ ॥

ततो धनुषि सन्धाय सायकं वज्रसन्निभम् ।
वालिसुग्रीवयोर्भ्रात्रोः न व्यक्तमुपधारयत् ॥ २० ॥

ततो रामो धनुष्पाणिस्तावुभौ समुदैक्षत ।
अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥ २१ ॥

यन्नावगच्छत्सुग्रीवं वालिनं वाऽपि राघवः ।
ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥ २२ ॥

एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना ।
अपश्यन्राघवं नाथमृश्यमूकं प्रदुद्रुवे ॥ २३ ॥

क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्झरीकृतः ।
वालिनाभिद्रुतः क्रोधात्प्रविवेश महद्वनम् ॥ २४ ॥

तं प्रविष्टं वनं दृष्ट्वा वाली शापभयात्ततः ।
मुक्तो ह्यसि त्वमित्युक्त्वा संनिवृत्तो महाबलः ॥ २५ ॥

राघवोऽपि सह भ्रात्रा सह चैव हनूमता ।
तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥ २६ ॥

तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् ।
ह्रीमान्दीनमुवाचेदं वसुधामवलोकयन् ॥ २७ ॥

आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ।
वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २८ ॥

तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः ।
वालिनं तं न हन्मीति ततो नाहमितो व्रजे ॥ २९ ॥

तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ ३० ॥

सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम् ।
कारणं येन बाणोऽयं न मया स विसर्जितः ॥ ३१ ॥

अलङ्कारेण वेषेण प्रमाणेन गतेन च ।
त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥ ३२ ॥

स्वरेण वर्चसा चैव प्रेक्षितेन च वानर ।
विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥ ३३ ॥

ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम ॥ ३४ ॥

नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ।
जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः
मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३५ ॥

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया ।
मौढ्यं च मम बाल्यं च ख्यापितं स्यात् कपीश्वर ॥

दत्ताभयवधो नाम पातकं महदुच्यते ॥ ३७ ॥

अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ।
त्वदधीना वयं सर्वे वनेऽस्मिञ्शरणं भवान् ॥ ३८ ॥

तस्माद्युद्धयस्वभूयस्त्वं मा शङ्कां गन्तुमर्हसि ।
एतन्मुहूर्ते सुग्रीव पश्य वालिनमाहवे ॥
निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३९ ॥

अभिज्ञानं कुरुष्व त्वमात्मनो वानरोत्तम ।
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ४० ॥

गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् ।
कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ४१ ॥

ततो गिरितटे जातामुत्पाट्य कुसुमाकुलाम् ।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे न्यसर्जयत् ॥ ४२ ॥

स तया शुशुभे श्रीमांल्लतया कण्ठसक्तया ॥ ४३ ॥

मालयेव बलाकानां ससन्ध्य इव तोयदः ।
विभ्राजमानो वपुषा रामवाक्यसमाहितः ॥
जगाम सह रामेण किष्किन्धां वालिपालिताम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्वादशः सर्गः ॥

आदितः श्लोकाः 9839 किष्किन्धाकाण्डे आदितः श्लोकाः 587

## त्रयोदशः सर्गः ॥ १३ ॥

### सप्तजनाश्रमदर्शनम् ॥

ऋश्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥ १ ॥

समुद्यम्य महच्चापं रामः काञ्चनभूषितम् ।
शरांश्चादित्यसंकाशान्गृहीत्वा रणसाधकान् ॥ २ ॥

अग्रतस्तु ययौ तस्य राघवस्य महात्मनः ।
सुग्रीवः संहतग्रीवो लक्ष्मणश्च महाबलः ॥ ३ ॥

पृष्ठतो हनुमान्वीरो नलो नीलश्च वानरः ।
तारश्चैव महातेजा हरियूथपयूथपः ॥ ४ ॥

ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः ।
प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥

कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा ।
शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६ ॥

वैडूर्यविमलैस्तोयैः पद्मैश्चाशोककुड्मलैः ।
शोभितान्सजलान्मार्गे तटाकांश्च व्यलोकयन् ॥ ७ ॥

कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः ।
चक्रवाकैस्तथा चान्यैः शकुनैः प्रतिनादितान् ॥ ८ ॥

मृदुशष्पाङ्कुराहारान्मृगपोतांश्च निर्भयान् ।
चरतः सर्वतोऽपश्यन्स्थलीषु हरिणान्स्थितान् ॥ ९ ॥

तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् ।
घोरानेकचरान्वन्यान्द्विरदप्रकूलघातिनः ॥ १० ॥

मत्तान्गिरितटोत्कृष्टान्पर्वतानिव जङ्गमान् ।
वारणान्वारिदप्रख्यान्महीरेणुसमुक्षितान् ॥ ११ ॥

वने वनचरांश्चान्यान्खेचरांश्च विहङ्गमान् ।
पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२ ॥

तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः ।
द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३ ॥

एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते ।
मेघसंघातविपुलः पर्यन्तकदलीवृतः ॥ १४ ॥

किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं महत् ।
कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६ ॥

एतद्राघव विस्तीर्णमाश्रमं श्रमनाशनम् ।
उद्यानवनसम्पन्नं स्वादुमूलफलोदकम् ॥ १७ ॥

अत्र सप्तजना नाम मुनयः संशितव्रताः ।
सप्तैवासन्नधःशीर्षा नियता जलशायिनः ॥ १८ ॥

सप्तरात्रकृताहारा वायुना वनवासिनः ।
दिवं वर्षशतैर्याताः सप्तभिः सकलेबराः ॥ १९ ॥

तेषामेवंप्रभावानां द्रुमप्राकारसंवृतम् ।
आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥

पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः ।
विशन्ति मोहाद्ये तत्र निवर्तन्ते न ते पुनः ॥ २१ ॥

विभूषणरवास्तत्र श्रूयन्ते सकलाक्षराः ।
तूर्यगीतस्वनाश्चात्र गन्धो दिव्यश्च राघव ॥ २२ ॥

त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्यत्र प्रकाशते ।
वेष्टयन्निव वृक्षाग्रान्कपोताङ्गारुणो घनः ॥ २३ ॥

एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः ।
मेघजालप्रतिच्छन्ना वैडूर्यगिरयो यथा ॥ २४ ॥

कुरु प्रणामं धर्मात्मंस्तान्समुद्दिश्य राघव ।
लक्ष्मणेन सह भ्रात्रा प्रयतः संयताञ्जलिः ॥ २५ ॥

प्रणमन्ति हि ये तेषां मुनीनां भावितात्मनाम् ।
न तेषामशुभं किंचिच्छरीरे राम विद्यते ॥ २६ ॥

ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः ।
समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७ ॥

अभिवाद्य च धर्मात्मा रामो भ्राता च लक्ष्मणः ।
सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८ ॥

ते गत्वा दूरमध्वानं तस्मात्सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९ ॥

ततस्तु रामानुजरामवानराः
प्रगृह्य शस्त्राण्युदिताग्र्यतेजसः ।
पुरीं सुरेशात्मजवीर्यपालितां
वधाय शत्रोः पुनरागताः सह ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥

आदितः श्लोकाः 9869 किष्किन्धाकाण्डे आदितः श्लोकाः 617

## चतुर्दशः सर्गः ॥ १४ ॥

### युद्धाय वाल्याह्वानम् ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीं ।
वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १ ॥

विसार्य सर्वतो दृष्टिं कानने काननप्रियः ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २ ॥

ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयत् ।
परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥ ॥ ३ ॥

गर्जन्निव महामेघो वायुवेगपुरःसरः ॥ ४ ॥

अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा ।
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ ५ ॥

हरिवागुरया व्याप्तां तप्तकाञ्चनतोरणाम् ।
प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् ॥

प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा ।
सफलां तां कुरु क्षिप्रं लतां काल इवागतः ॥ ७ ॥

एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ।
तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ॥ ८ ॥

कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ।
लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव ॥ ९ ॥

शोभसे ह्यधिकं वीर लतया कण्ठसक्तया ।
विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ १० ॥

अद्य वालिसमुत्थं ते भयं वैरं च वानर ।
एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ॥ ११ ॥

मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् ।
वाली विनिहतो यावद्वने पांसुषु वेष्टते ॥ १२ ॥

यदि दृष्टिपथं प्राप्तो जीवन्स विनिवर्तते ।
ततो दोषेण माऽऽगच्छेत्सद्यो गर्हेच्च मा भवान् ॥ १३ ॥

प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः ।
तेनावेहि बलेनाद्य वालिनं निहतं मया ॥ १४ ॥

अनृतं नोक्तपूर्वं मे कृच्छ्रे महति तिष्ठता ।
धर्मलोभपरीतेन न च वक्ष्ये कथंचन ॥ १५ ॥

सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ।
प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ॥ १६ ॥

तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः ।
सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः ॥ १७ ॥

जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा ।
निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ॥ १८ ॥

रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे ।
जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥ १९ ॥

स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ।
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥ २० ॥

तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ।
राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥ २१ ॥

द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ।
पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥ २२ ॥

ततः स जीमूतगणप्रणादो
नादं विमुञ्चंस्त्वरया प्रतीतः ।
सूर्यात्मजः शौर्यविवृद्धतेजाः
सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥

आदितः श्लोकाः 9892 किष्किन्धाकाण्डे आदितः श्लोकाः 640

## पञ्चदशः सर्गः ॥ १५ ॥

### तारोपदेशः ॥

अथ तस्य निनादं तं सुग्रीवस्य महात्मनः ।
शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १ ॥

श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ।
मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २ ॥

स तु रोषपरीताङ्गो वाली सन्ध्यातपप्रभः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥

वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निसंनिभः ।
भात्युत्पतितपद्माभः समृणाल इवह्रदः ॥ ४ ॥

शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।
वेगेन चरणन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥

तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा ।
उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६ ॥

साधु क्रोधमिमं वीर नदीवेगमिवागतम् ।
शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥

काल्यमेतेन सङ्ग्रामं करिष्यसि च वानर ।
वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८ ॥

सहसा तव निष्क्रामो मम तावन्न रोचते ।
श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ९ ॥

पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि ।
निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥ १० ॥

त्वया तस्य निरस्तस्य पीडितस्य विशेषतः ।
इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११ ॥

दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ।
निनादस्य च संरम्भो नैतदल्पं हि कारणम् ॥ १२ ॥

नासहायमहं मन्ये सुग्रीवं तमिहागतम् ।
अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३ ॥

प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः ।
अपरीक्षितवीर्येण सुग्रीवः सह नैष्यति ॥ १४ ॥

पूर्वमेव मया वीर श्रुतं कथयतो वचः ।
अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितंवचः ॥ १५ ॥
अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः ।
प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥ १६ ॥
अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ ।
इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥
सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ ॥ १७ ॥
तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ।
रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ॥ १८ ॥
निवासवृक्षः साधूनामापन्नानां परा गतिः ।
आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ १९ ॥
ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ।
धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥ २० ॥
तत्क्षमं न विरोधस्ते सह तेन महात्मना ।
दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ॥ २१ ॥
शूर वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् ।
श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ॥ २२ ॥
यौवराज्ये तु सुग्रीवं तूर्णं साध्वभिषेचय ।
विग्रहं मा कृथा वीर भ्रात्रा राजन्बलीयसा ॥ २३ ॥
अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ।
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २४ ॥

लालनीयो हि ते भ्राता यवीयानेष वानरः ।
तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ॥ २५ ॥

न हि तेन समं बन्धुं भुवि पश्यामि कंचन ।
दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ॥ २६ ॥

वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ।
सुग्रीवो विपुलग्रीवस्तव बन्धुः सदा मतः ॥ २७ ॥

भ्रातुः सौहृदमालम्ब नान्या गतिरिहास्ति ते ॥ २८ ॥

यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् ।
याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९ ॥

प्रसीद पथ्यं शृणु जल्पितं हि मे
न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोसलराजसूनुना
न विग्रहः शक्रसमानतेजसा ॥ ३० ॥

तदा हि तारा हितमेव वाक्यं
तं वालिनं पथ्यमिदं बभाषे ।
न रोचते तद्वचनं हि तस्य
कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥

आदितः श्लोकाः 9923 किष्किन्धाकाण्डे आदितः श्लोकाः 671

## षोडशः सर्गः ॥ १६ ॥

### वालिवधः ॥

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् ।
वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥

गर्जतोऽस्य सुसंरब्धं भ्रातुः शत्रोर्विशेषतः ।
मर्षयिष्याम्यहं केन कारणेन वरानने ॥ २ ॥

अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् ।
धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३ ॥

सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे ।
सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जतः ॥ ४ ॥

न च कार्यो विषादस्ते राघवं प्रति मत्कृते ।
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५ ॥

निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि ।
सौहृदं दर्शितं तारे मयि भक्तिः कृता त्वया ॥ ६ ॥

प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि संभ्रमम् ।
दर्पं चास्य विनेष्यामि न च प्राणैर्विमोक्ष्यते ॥ ७ ॥

अहं ह्याजिस्थितस्यास्य करिष्यामि यथेप्सितम् ।
वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८ ॥

न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् ।
कृतं तारे सहायत्वं सौहृदं दर्शितं मयि ॥ ९ ॥

शापिताऽसि मम प्राणैर्निवर्तस्व जयेन च ।
अहं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥

तं तु तारा परिष्वज्य वालिनं प्रियवादिनी ।
चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११ ॥

ततः स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी ।
अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२ ॥

प्रविष्टायां तु तारायां सहस्त्रीभिः स्वमालयम् ।
नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥

स निश्वस्य महावेगो वाली परमरोषणः ।
सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १४ ॥

स ददर्श ततः श्रीमान्सुग्रीवं हेमपिङ्गलम् ।
सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५ ॥

तं स दृष्ट्वा महावीर्यः सुग्रीवं पर्यवस्थितम् ।
गाढं परिदधे वासो वाली परमरोषणः ॥ १६ ॥

स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् ।
सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७ ॥

श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः ।
सुग्रीवोऽपि समुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥

तं वाली क्रोधताम्राक्षः सुग्रीवं रणपण्डितम् ।
आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९ ॥

एष मुष्टिर्मया बद्धो गाढः संनिहिताङ्गुलिः ।
मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २० ॥

एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् ।
तवैव चाहरन्प्राणान्मुष्टिः पततु मूर्धनि ॥ २१ ॥

ताडितस्तेन संक्रुद्धः समभिक्रम्य वेगितः ।
अभवच्छोणितोद्गारी सोत्पीड इव पर्वतः ॥ २२ ॥

सुग्रीवेण तु निःसङ्गं सालमुत्पाट्य तेजसा ।
गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥

स तु वाली प्रचलितः सालताडनविह्वलः ।
गुरुभारसमाक्रान्तो नौसार्थ इव सागरे ॥ २४ ॥

तौ भीमबलविक्रान्तौ सुपर्णानिलवेगितौ ।
प्रवृद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥ २५ ॥

परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ॥ २६ ॥

ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ॥ २७ ॥

सूर्यपुत्रो महावीर्यः सुग्रीवः परिहीयत ॥ २८ ॥

वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ।
वालिनं प्रति सामर्षो दर्शयामास लाघवम् ॥ २९ ॥

वृक्षैः सशाखैः सशिखैर्वज्रकोटिनिभैर्नखैः ।
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः ॥
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ ३० ॥

तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ।
मेघाविव महाशब्दैस्तर्जयानौ परस्परम् ॥ ३१ ॥

हीयमानमथोऽपश्यत्सुग्रीवं वानरेश्वरम् ।
वीक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३२ ॥

ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ।
शरं च वीक्षते वीरो वालिनो वधकारणात् ॥ ३३ ॥

ततो धनुषि सन्धाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३४ ॥

तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ।
प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३५ ॥

मुक्तस्तु वज्रनिर्घोषो प्रदीप्ताशनिसन्निभः ।
राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३६ ॥

ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः ।
वेगेनाभिहतो वाली निपपात महीतले ॥ ३७ ॥

इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले ।
आश्वयुक्समये मासि गतश्रीको विचेतनः ॥ ३८ ॥

नरोत्तमः कालयुगान्तकोपमं
शरोत्तमं काञ्चनरूप्यभूषितम् ।
ससर्ज दीप्तं तममित्रमर्दनं
सधूममग्निं मुखतो यथा हरः ॥ ३९ ॥

अथोक्षितः शोणिततोयविस्रवैः
सुपुष्पिताशोक इवानिलोद्धतः ।
विचेतनो वासवसूनुराहवे
विभ्रंशितेन्द्रध्वजवत् क्षितिं गतः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षोडशः सर्गः ॥

आदितः श्लोकाः **9963** किष्किन्धाकाण्डे आदितः श्लोकाः **711**

## सप्तदशः सर्गः ॥ १७ ॥

### वालिना रामगर्हणम् ॥

ततः शरेणाभिहतो रामेण रणकर्कशः ।
पपात सहसा वाली निकृत्त इव पादपः ॥ १ ॥

स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ।
अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥

तस्मिन्निपतिते भूमौ हर्यृक्षाणां गणेश्वरे ।
नष्टचन्द्रमिव व्योम न व्यराजत भूतलम् ॥ ३ ॥

भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥

शक्रदत्ता वरा माला काञ्चना वज्रभूषिता ।
दधार हरिराजस्य प्राणांस्तेजः श्रियं च सा ॥ ५ ॥

स तया मालया वीरो हैमया हरियूथपः ।
सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६ ॥

तस्य माला च देहश्च मर्मघाती च यः शरः ।
त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७ ॥

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् ।
रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८ ॥

तं तदा पतितं संख्ये गतार्चिषमिवानलम् ॥ ९ ॥

ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ।
आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥ १० ॥

महेन्द्रमिव दुर्धर्षं महेन्द्रमिव दुःसहम् ।
महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११ ॥

सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ।
लक्ष्मणानुचरो रामो ददर्श गतचेतनम् ॥ १२ ॥

बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ।
उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥

स भूमावल्पतेजोऽसुर्निहतो नष्टचेतनः ॥ १४ ॥
अर्थसंहितया वाचा गर्वितं रणगर्वितः ।
तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ॥

अब्रवीत् प्रश्रितं वाक्यं परुषं धर्मसंहितम् ॥ १५ ॥

पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः ।
यदहं युद्धसंरब्धः शरेणोरसि ताडितः ॥ १६ ॥

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः ॥ १७ ॥

रामः करुणवेदी च प्रजानां च हिते रतः ।
सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः ॥
इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १८ ॥

दमः शमः क्षमा धर्मो धृतिः सत्यं पराक्रमः ।
पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ॥ १९ ॥

तान् गुणान् संप्रधार्याहमग्र्यं चाभिजनं तव ।
तारया प्रतिषिद्धःसन् सुग्रीवेण समागतः ॥ २० ॥

न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति ।
इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ २१ ॥

न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ।
जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ २२ ॥

सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥ २३ ॥

विषये वा पुरे वा ते यदा नापकरोम्यहम् ।
न च त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम् ॥ २४ ॥

फलमूलाशनं नित्यं वानरं वनगोचरम् ।
मामिहाप्रतियुद्ध्यन्तमन्येन च समागतम् ॥ २५ ॥

कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ।
धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २६ ॥

राम राजकुले जातो धर्मवानिति विश्रुतः ।
अभव्यो भव्यरूपेण किमर्थं परिधावसि ॥ २७ ॥

साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ।
पार्थिवानां गुणा राजन्दण्डश्चाप्यपकारिषु ॥ २८ ॥

वयं वनचरा राम मृगा मूलफलाशनाः ॥ २९ ॥

एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वर ॥ ३० ॥

भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ।
तत्र कस्ते वने लाभो मदीयेषु फलेषु वा ॥ ३१ ॥

नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३२ ॥

त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः ।
राजवृत्तैश्च सङ्कीर्णः शरासनपरायणः ॥ ३३ ॥

न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धरवस्थिता ।
इन्द्रियैः कामवृत्तः सन्कृष्यसे मनुजेश्वर ॥ ३४ ॥

हत्वा बाणेन काकुत्स्थ मामिहानपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा सुदुष्करम् ॥ ३५ ॥

राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३६ ॥

सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं पापात्मनामेते गच्छन्ते नात्र संशयः ॥ ३७ ॥

अधार्यं चर्म मे सद्भी रोमाण्यस्थि च वर्जितम् ।
अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥ ३८ ॥

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ।
शल्यकः श्वाविडो गोधा शशः कूर्मश्च पञ्चमः ॥ ३९ ॥

चर्म चास्थि च मे राजन्न स्पृशन्ति मनीषिणः ।
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥ ४० ॥

तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ।
तदतिक्रम्य मोहेन कालस्य वशमागतः ॥ ४१ ॥

त्वया नाथेन काकुत्स्थ न सनाथा वसुन्धरा ।
प्रमदा शीलसंपन्ना धूर्तेन पतिना यथा ॥ ४२ ॥

शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४३ ॥

छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ।
त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४४ ॥

अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ।
वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४५ ॥

उदासीनेषु योऽस्मासु विक्रमोऽयं प्रकाशितः ।
अपकारिषु ते राम नैव पश्यामि विक्रमम् ॥ ४६ ॥

दृश्यमानस्तु युध्येथा मया यदि नृपात्मज ।
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४७ ॥

त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः ।
प्रसुप्तः पन्नगेनेव नरः पानवशं गतः ॥ ४८ ॥

सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया ।
मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ।
मैथिलीमहमेकाह्ना त्वानयिष्याम्यसंशयम् ॥ ४९ ॥

राक्षसं च दुरात्मानं तव भार्यापहारिणम् ।
ग्रीवायां तु दशग्रीवं बद्ध्वा संप्रददे तव ॥ ५० ॥

न्यस्तां सागरतोये वा पाताले वापि मैथिलीम् ।
आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ॥ ५१ ॥

युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ।
अयुक्तं यदधर्मेण त्वयाऽहं निहतो रणे ॥ ५२ ॥

काममेवंविधे लोकः कालेन विनियुज्यते ।
क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥ ५३ ॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघाताद्व्यथितो महात्मा ।
समीक्ष्य रामं रविसन्निकाशं
तूष्णीं बभूवामरराजसूनुः ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे सप्तदशः सर्गः ॥

आदितः श्लोकाः 10017 किष्किन्धाकाण्डे आदितः श्लोकाः 765

अष्टादशः सर्गः ॥ १८ ॥

वालिवधसमर्थनम् ॥

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् ।
परुषं वालिना रामो निहतेन विचेतसा ॥ १ ॥

तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् ।
उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २ ॥

धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् ।
अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३ ॥

धर्ममर्थं च कामं च समयं चापि लौकिकम् ।
अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ४ ॥

अपृष्ट्वा बुद्धिसंपन्नान् वृद्धानाचार्यसम्मतान् ।
सौम्य वानरचापल्यात्किं मां वक्तुमिहेच्छसि ॥ ५ ॥

इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
मृगपक्षिमनुष्याणां निग्रहानुग्रहेष्वपि ॥ ६ ॥

तां पालयति धर्मात्मा भरतः सत्यवागृजुः ।
धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७ ॥

नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम् ।
विक्रमश्च यथादृष्टः स राजा देशकालवित् ॥ ८ ॥

तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः ।
चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥ ९ ॥

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ।
पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ १० ॥

ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ ११ ॥

त्वं तु संक्लिष्टधर्मा च कर्मणा च विगर्हितः ।
कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥

ज्येष्ठो भ्राता पिता वापि यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया धर्मे पथि हि वर्तिनः ॥ १३ ॥

यवीयान् सोदरः पुत्रः शिष्यश्चापि गुणान्वितः ।
पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेदत्र कारणम् ॥ १४ ॥

सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम ।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥ १५ ॥

चपलश्चपलैः सार्धं वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैर्मन्त्रयन्द्रक्ष्यसे नु किम् ॥ १६ ॥

अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७ ॥

तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८ ॥

अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥ १९ ॥

तद्व्यतीतस्य ते धर्मात्कामवृत्तस्य वानर ।
भ्रातृभार्याविमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥ २० ॥

न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ २१ ॥

न च ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ॥ २२ ॥

औरसीं भगिनीं चापि भार्यां वाऽप्यनुजस्य यः ।
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥ २३ ॥

भरतस्तु महीपालो वयं त्वादेशवर्तिनः ।
त्वं च धर्मादतिक्रान्तः कथं शक्यमुपेक्षितुम् ॥ २४ ॥

गुरुर्धर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ।
भरतः कामवृत्तानां निग्रहे पर्यवस्थितः ॥ २५ ॥

वयं तु भरतादेशं विधिं कृत्वा हरीश्वर ।
त्वद्विधान् भिन्नमर्यादान्निहन्तुं पर्यवस्थिताः ॥ २६ ॥

सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ।
दारराज्यनिमित्तं च निःश्रेयसकरः स मे ॥ २७ ॥

प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ।
प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ॥ २८ ॥

तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंहितैः ।
शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ॥ २९ ॥

सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ ३० ॥

वयस्यस्यापि कर्तव्यं धर्ममेवानुपश्यतः ।
शक्यं त्वयापि तत्कार्यं धर्ममेवानुपश्यता ॥ ३१ ॥

श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ।
गृहीतौ धर्मकुशलैस्तत्तथा चरितं हरे ॥ ३२ ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३३ ॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥ ३४ ॥

आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् ।
श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥ ३५ ॥

अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ।
प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥ ३६ ॥

तदलं परितापेन धर्मतः परिकल्पितः ।
वधो वानरशार्दूल न वयं स्ववशे स्थिताः ॥ ३७ ॥

शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ।
तच्छ्रुत्वा हेतुमद्वीर न मन्युं कर्तुमर्हसि ॥ ३८ ॥

न मे तत्र मनस्तापो न मन्युर्हरियूथप ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३९ ॥

प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् ।
प्रधावितान्वा वित्रस्तान्विस्रब्धांश्चापि निष्ठितान्॥ ४० ॥

ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ यस्मिन्वसति रावणः ॥ १० ॥

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
प्राप्तकालं विधास्यामि तस्मिन्काले सह त्वया ॥ ११ ॥

नाहमस्मिन्प्रभुः कार्ये वानरेश न लक्ष्मणः ।
त्वमेव हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ॥ १२ ॥

त्वमेवाज्ञापय विभो मम कार्यविनिश्चयम् ।
त्वं हि जानासि यत्कार्यं मम वीर न संशयः ॥ १३ ॥

सुहृद्द्वितीयो विक्रान्तः प्राज्ञः कालविशेषवित् ।
भवानस्मद्धिते युक्तः सुकृतार्थोऽर्थवित्तमः ॥ १४ ॥

एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ।
अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ॥
शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरः ॥ १५ ॥

सोमसूर्यात्मजैः सार्धं वानरैर्वानरोत्तम ।
देशकालनयैर्युक्तः कार्याकार्यविनिश्चये ॥ १६ ॥

वृतः शतसहस्रेण वानराणां तरस्विनाम् ।
अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ॥ १७ ॥

तत्र सीतां च वैदेहीं निलयं रावणस्य च ।
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ॥ १८ ॥

नदीं भागीरथीं रम्यां यामुनं च महागिरिम् ॥ १९ ॥

सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ।
महीं कालमहीं चैव शैलकाननशोभिताम् ॥ २० ॥

ब्रह्ममालान्विदेहांश्च मालवान् काशिकोसलान् ।
मागधांश्च महाग्रामान् पुण्ड्रान्वङ्गांस्तथैव च ॥
पत्तनं कोशकाराणां भूमिं च रजताकराम् ॥ २१ ॥

सर्वमेतद्विचेतव्यं मृगयद्भिस्ततस्ततः ।
रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ॥ २२ ॥

समुद्रमवगाढांश्च पर्वतान्पत्तनानि च ।
मन्दरस्य च ये कोटिं संश्रिताः केचिदायताम् ॥ २३ ॥

कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः ।
घोरलोहमुखाश्चैव जवनाश्चैकपादकाः ॥ २४ ॥

अक्षया बलवन्तश्च पुरुषाः पुरुषादकाः ।
किराताः कर्णचूडाश्च हेमाङ्गाः प्रियदर्शनाः ॥ २५ ॥

आममीनाशनास्तत्र किराता द्वीपवासिनः ।
अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ॥
एतेषामालयाः सर्वे विचेयाः काननौकसः ॥ २६ ॥

गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च ।
रत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥
सुवर्णकुड्यकं चैव सुवर्णाकरमण्डितम् ॥ २७ ॥

यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ।
दिवं स्पृशति शृङ्गेण देवदानवसेवितः ॥ २८ ॥

एतेषां गिरिदुर्गेषु प्रभूतेषु वनेषु च ।
मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् ॥ २९ ॥

ततो रक्तजलं शोणमगाधं शीघ्रगामिनम् ।
गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३० ॥

तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३१ ॥

पर्वतप्रभवा नद्यः सुरम्या बहुनिष्कुटाः ।
मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥ ३२ ॥

ततः समुद्रद्वीपांश्च सुभीमान्द्रष्टुमर्हथ ॥ ३३ ॥

ऊर्मिमन्तं समुद्रं च क्रोशन्तमनिलोद्धतम् ॥ ३४ ॥

तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः ।
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३५ ॥

तं कालमेघप्रतिमं महोरगनिषेवितम् ।
अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥ ३६ ॥

ततो रक्तजलं भीमं लोहितं नाम सागरम् ।
गता द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥ ३७ ॥

गृहं च वैनतेयस्य नानारत्नोपशोभितम् ।
तत्र कैलाससङ्काशं विहितं विश्वकर्मणा ॥ ३८ ॥

तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः ।
शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ॥ ३९ ॥

ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ।
निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः ॥ ४० ॥

अभितप्ताश्च सूर्येण लम्बन्ते स्म पुनः पुनः ॥ ४१ ॥

ततः पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ।
गता द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः ॥ ४२ ॥

तस्य मध्ये महाञ्श्वेत ऋषभो नाम पर्वतः ।
दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥ ४३ ॥

सरश्च राजतैः पद्मैर्ज्वलितैर्हेमकेसरैः ।
नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ॥ ४४ ॥

विबुधाश्चारणा यक्षाः किन्नराश्चाप्सरोगणाः ।
हृष्टाः समभिगच्छन्ति नलिनीं तां रिरंसवः ॥ ४५ ॥

क्षीरोदं समतिक्रम्य गता द्रक्ष्यथ वानराः ।
जलोदं सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४६ ॥

तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ।
अस्याहुस्तं महावेगमोदनं सचराचरम् ॥ ४७ ॥

तत्र विक्रोशतां नादो भूतानां सलिलौकसाम् ।
श्रूयते च समर्थानां दृष्ट्वा तद्बडबामुखम् ॥ ४८ ॥

जलदस्योत्तरे तीरे योजनानि त्रयोदश ।
जातरूपशिलो नाम महान्कनकपर्वतः ॥ ४९ ॥

तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् ।
पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ५० ॥

आसीनं पर्वतस्याग्रे सर्वदेवनमस्कृतम् ।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५१ ॥

त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः ।
स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५२ ॥

पूर्वस्यां दिशि निर्माणं कृतं तत्त्रिदशेश्वरैः ॥ ५३ ॥

ततः परं हेममयः श्रीमानुदयपर्वतः ।
तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ॥ ५४ ॥

जातरूपमयी दिव्या विराजति सवेदिका ।
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥ ५५ ॥

जातरूपमयैर्दिव्यैः शोभते सूर्यसन्निभैः ॥ ५६ ॥

तत्र योजनविस्तारमुच्छ्रितं शतयोजनम् ।
शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७ ॥

तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ।
द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८ ॥

उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः ।
दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रितम् ॥ ५९ ॥

तत्र वैखानसा नाम वालखिल्या महर्षयः ।
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ६० ॥

अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते ।
यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ६१ ॥

तस्य शैलस्य कुञ्जेषु कन्दरेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२ ॥

काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥ ६३ ॥

पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च ।
सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४ ॥

तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६५ ॥

ततः परमगम्या स्याद्दिक्पूर्वा त्रिदशावृता ।
रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥ ६६ ॥

शैलेषु तेषु सर्वेषु कन्दरेषु वनेषु च ।
ये च नोक्ता मया देशा विचेया तेषु जानकी ॥ ६७ ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८ ॥

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥ ६९ ॥

ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम ।
सिद्धार्थाः सन्निवर्तध्वमधिगम्य च मैथिलीम् ॥ ७० ॥

महेन्द्रकान्तां वनषण्डमण्डितां
दिशं चरित्वा निपुणेन वानराः ।
अवाप्य सीतां रघुवंशजप्रियां
ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥

आदितः श्लोकाः **10991** किष्किन्धाकाण्डे आदितः श्लोकाः **1739**

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

### दक्षिणस्यां हनुमत्प्रेषणम् ॥

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥

नीलमग्निसुतं चैव हनुमन्तं च वानरम् ।
पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २ ॥

सुहोत्रं च शरारिं च शरगुल्मं तथैव च ।
गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३ ॥

मैन्दं च द्विविदं चैव शरभं गन्धमादनम् ।
उल्कामुखमसङ्गं च हुताशनसुतावुभौ ॥ ४ ॥

अङ्गदप्रमुखान् वीरान् वीरः कपिगणेश्वरः ।
वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ॥ ५ ॥

तेषामग्रेसरं चैव महाबलमथाङ्गदम् ।
विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६ ॥

ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।
कपीशः कपिमुख्यानां स तेषां तानुदाहरत् ॥ ७ ॥

सहस्रशिखरं विन्ध्यं नानाद्रुमलतायुतम् ।
नर्मदां च नदीं दुर्गां महोरगनिषेविताम् ॥ ८ ॥

ततो भोगवतीं रम्यां कृष्णवेणीं महानदीम् ।
वरदां च महाभागां महोरगनिषेविताम् ॥ ९ ॥

मेखलामुत्कलां चैव दशार्णनगराण्यपि ।
अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १० ॥

विदर्भानृषिकांश्चैव रम्यान्माहिषकानपि ।
तथा वङ्गकलिङ्गांश्च कौशिकांश्च समन्ततः ॥ ११ ॥

अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् ।
नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥
तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यान् सकेरलान् ॥

अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ।
विचित्रशिखरः श्रीमांश्चित्रपुष्पितपादपः ॥ १३ ॥

स चन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥ १४ ॥

ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् ।
तत्र द्रक्ष्यथ कावेरीं विहितामप्सरोगणैः ॥ १५ ॥

तस्यासीनं नगस्याग्रे मलयस्य महौजसम् ।
द्रक्ष्यथादित्यसङ्काशमगस्त्यमृषिसत्तमम् ॥ १६ ॥

ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ।
ताम्रपर्णीं महाग्राहां तरिष्यथ महानदीम् ॥ १७ ॥

सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी ।
कान्तेव युवती कान्तं समुद्रमवगाहते ॥ १८ ॥

ततो हेममयं दिव्यं मुक्तामणिनिषेवितम् ।
युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ॥ १९ ॥

ततः समुद्रमासाद्य संप्रधार्यार्थनिश्चयम् ।
अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥ २० ॥

चित्रनानानगः श्रीमान्महेन्द्रः पर्वतोत्तमः ।
जातरूपमयः श्रीमानवगाढो महार्णवम् ॥ २१ ॥

नानाविधैर्नगैः फुल्लैर्लताभिश्चोपशोभितम् ।
गन्धर्वयक्षप्रवरैरप्सरोभिश्च शोभितम् ॥ २२ ॥

सिद्धचारणसंघैश्च प्रकीर्णं सुमनोहरम् ।
तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ २३ ॥

द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः ।
अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः ॥ २४ ॥

तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ॥ २५ ॥

स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ।
राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ २६ ॥

दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी ।
अङ्गारकेति विख्याता छायामाकृष्य भोजनी ॥ २७ ॥

एवं निस्संशयान्कृत्वा संशयान्नष्टसंशयाः ।
मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ॥ २८ ॥

तमतिक्रम्य लक्ष्मीवान्समुद्रे शतयोजने ।
गिरिः पुष्पितको नाम सिद्धचारणसेवितः ॥ २९ ॥

चन्द्रसूर्यांशुसङ्काशः सागराम्बुसमावृतः ।
भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥ ३० ॥

तस्यैक काञ्चनं शृङ्गं सेवते यं दिवाकरः ।
श्वेतं राजतमेकं च सेवते यं निशाकरः ॥ ३१ ॥

न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ।
प्रणम्य शिरसा शैलं तं विमार्गत वानराः ॥ ३२ ॥

तमतिक्रम्य दुर्धर्षाः सूर्यवान्नाम पर्वतः ।
अध्वना दुर्विगाहेन योजनानि चतुर्दश ॥ ३३ ॥

ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ।
सर्वकामफलैर्वृक्षैः सर्वकालमनोहरैः ॥ ३४ ॥

तत्र भुक्त्वा महार्हाणि मूलानि च फलानि च ।
मधूनि पीत्वा मुख्यानि परं गच्छत वानराः ॥ ३५ ॥

तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ।
अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा ॥ ३६ ॥

तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ।
शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ॥ ३७ ॥

तत्र भोगवती नाम सर्पाणामालयः पुरी ।
विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता ॥ ३८ ॥

रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३९ ॥

सर्पराजो महाघोरो यस्यां वसति वासुकिः ।
निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ४० ॥

तत्र चानन्तरा देशा ये केचन सुसंवृताः ॥ ४१ ॥

तं च देशमतिक्रम्य महानृषभसंस्थितः ।
सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः ॥ ४२ ॥

गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ॥ ४३ ॥

न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं च कदाचन ।
रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनम् ॥ ४४ ॥

तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ।
शैलूषो ग्रामणीः शिग्रुः शुभ्रो बभ्रुस्तथैव च ॥ ४५ ॥

रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ।
अन्ते पृथिव्या दुर्धर्षास्तत्र स्वर्गजितः स्थिताः ॥ ४६ ॥

ततः परं न वः सेव्यः पितृलोकः सुदारुणः ।
राजधानी यमस्यैषा कष्टेन तमसा वृता ॥ ४७ ॥

एतावदेव युष्माभिर्वीरा वानरपुङ्गवाः ।
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥ ४८ ॥

सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते ।
गतिं विदित्वा वैदेह्याः सन्निवर्तितुमर्हथ ॥ ४९ ॥

यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति ।
मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ५० ॥

ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः ।
कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥ ५१ ॥

अमितबलपराक्रमा भवन्तो
विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं
तदधिगुणं पुरुषार्थमारभध्वम् ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11043 किष्किन्धाकाण्डे आदितः श्लोकाः 1791

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

### प्रतीच्यां सुषेणप्रेषणम् ॥

अथ प्रस्थाप्य सुग्रीवस्तान्हरीन्दक्षिणां दिशम्
अब्रवीन्मेघसङ्काशं सुषेणं नाम यूथपम् ॥ १ ॥

तारयाः पितरं राजा श्वशुरं भीमविक्रमम् ।
अब्रवीत्प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २ ॥

मरीचिपुत्रं मारीचमर्चिष्मन्तं महाकपिम् ।
वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३ ॥

बुद्धिविक्रमसंपन्नं वैनतेयसमद्युतिम् ।
मरीचिपुत्रान्मारीचानर्चिर्मालान्महाबलान् ॥
ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् ॥ ४ ॥

द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ।
सुषेणप्रमुखा यूयं वैदेहीं परिमार्गत ॥ ५ ॥

सुराष्ट्रान्सहबाह्लीकान् शूरान्भीमांस्तथैव च ।
स्फीताञ्जनपदान्रम्यान्विपुलानि पुराणि च ॥ ६ ॥

पुन्नागगहनं कुक्षिं बकुलोद्दालकाकुलम् ।
तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः ॥ ७ ॥

प्रत्यक्स्रोतोगमाश्चैव नद्यः शीतजलाः शिवाः ।
तापसानामरण्यानि कान्तारा गिरयश्च ये ॥ ८ ॥

ततः स्थलीं मरुप्रायामत्युच्चशिरसः शिलाः ।
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ॥ ९ ॥

ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ ।
तिमिनक्रायुतजलमक्षोभ्यमथ वानराः ॥ १० ॥

ततः केतकषण्डेषु तमालगहनेषु च ।
कपयो विहरिष्यन्ति नारिकेलवनेषु च ॥ ११ ॥

तत्र सीतां च मार्गध्वं निलयं रावणस्य च ।
वेलातटनिविष्टेषु पर्वतेषु वनेषु च ॥ १२ ॥

मुरचीपत्तनं चैव रम्यं चैव जटीपुरम् ।
अवन्तीमङ्गलोपां च तथाचालक्षितं वनम् ॥
राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १३ ॥

सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्वतः ।
महान्हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १४ ॥

तस्य प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः ।
तिमिमत्स्यगजांश्चैव नीडान्यारोपयन्ति ते ॥ १५ ॥

तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये ।
दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिस्वनाः ॥ १६ ॥
विचरन्ति विशालेऽस्मिंस्तोयपूर्णे समन्ततः ॥ १७ ॥

तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ।
सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ॥ १८ ॥

कोटिं तत्र समुद्रेऽथ काञ्चनीं शतयोजनाम् ।
दुर्दर्शां पारियात्रस्य गता द्रक्ष्यथ वानराः ॥ १९ ॥

कोट्यस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ।
वसन्त्यग्निनिकाशानां घोराणां पापकर्मणाम् ॥ २० ॥

पावकार्चिःप्रतीकाशाः समवेताः सहस्रशः ।
नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ॥ २१ ॥

नादेयं च फलं तस्माद्देशात्किंचित्प्लवङ्गमैः ।
दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः ॥ २२ ॥

फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः ।
तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी ॥
न हि तेभ्यो भयं किंचित्कपित्वमनुवर्तताम् ॥ २३ ॥

तत्र वैडूर्यवर्णाभो वज्रसंस्थानसंस्थितः ।
नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥
श्रीमान्समुदितस्तत्र योजनानां शतं समम् ॥ २४ ॥

गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः ॥ २५ ॥

चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः ॥ २६ ॥

तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २७ ॥

तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् ।
आ जहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २८ ॥

तत्र सानुषु चित्रेषु विशालासु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २९ ॥

योजनानां ततः षष्टिर्वराहो नाम पर्वतः ।
सुवर्णशृङ्गः सुश्रीमानगाधे वरुणालये ॥ ३० ॥

तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् ।
यस्मिन्वसति दुष्टात्मा नरको नाम दानवः ॥ ३१ ॥

तत्र सानुषु रम्येषु काननेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३२ ॥

तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरनिर्दरः ।
पर्वतः सर्वसौवर्णो धाराप्रस्रवणायुतः ॥ ३३ ॥

तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्वतः ।
अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३४ ॥

यस्मिन्हरिहयः श्रीमान्महेन्द्रः पाकशासनः ।
अभिषिक्तः सुरै राजा मेघवान्नाम पर्वतः ॥ ३५ ॥

तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् ।
षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६ ॥

तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३७ ॥

तेषां मध्ये स्थितो राजा मेरुरुत्तरपर्वतः ।
आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८ ॥

तेनैवमुक्तः शैलेन्द्रः सर्व एव त्वदाश्रयाः ।
मत्प्रसादाद्भविष्यन्ति दिवा रात्रौ च काञ्चनाः ॥ ३९ ॥

त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः ।
ते भविष्यन्ति रक्ताश्च प्रभया काञ्चना इव ॥ ४० ॥

विश्वे देवाश्च मरुतो वसवश्च दिवौकसः ।
आगम्य पश्चिमां सन्ध्यां मेरुमुत्तरपर्वतम् ॥ ४१ ॥

आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।
अदृश्यस्सर्वभूतानामस्तं गच्छति पर्वतम् ॥ ४२ ॥

योजनानां सहस्राणि शतानि च दिवाकरः ।
मुहूर्तार्धेन तं शीघ्रमस्तं याति शिलोच्चयम् ॥ ४३ ॥

शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥ ४४ ॥

शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः ।
निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५ ॥

अन्तरा मेरुमस्तं च तालो दशशिरा महान् ।
जातरूपमयः श्रीमान् भ्राजते चित्रवेदिकः ॥ ४६ ॥

तेषु सर्वेषु दुर्गेषु सरस्सु च सरित्सु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७ ॥

यत्र तिष्ठति धर्मज्ञस्तपसा स्वेन भावितः ।
मेरुसावर्णिरित्येव ख्यातो वै ब्रह्मणा समः ॥ ४८ ॥

प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्यसन्निभः ।
प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९ ॥

एतावज्जीवलोकस्य भास्करो रजनीक्षये ।
कृत्वा वितिमरं सर्वमस्तं गच्छति पर्वतम् ॥ ५० ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानीमस्ततःपरम् ॥ ५१ ॥

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
अस्तपर्वतमासाद्य पूर्णे मासे निवर्तत ॥ ५२ ॥

ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥ ५३ ॥

सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ।
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ॥ ५४ ॥

गुरुरेष महाबाहुः श्वशुरो मे महाबलः ।
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु ॥ ५५ ॥

प्रमाणमेनं संस्थाप्य सर्वतः पश्चिमां दिशम् ।
भवन्तः परिपश्यन्तु यथा दृश्येत जानकी ॥ ५६ ॥

दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः ।
कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥ ५७ ॥

अतोऽन्यदपि यत्किञ्चित् कार्यस्यास्य हितं भवेत् ।
संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५८ ॥

ततः सुषेणप्रमुखाः प्लवङ्गमाः
सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपास्ते
जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11102 किष्किन्धाकाण्डे आदितः श्लोकाः 1850

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

### उदीच्यां शतबलिप्रेषणम् ॥

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ।
वीरं शतबलिं नाम वानरं वानराधिपः ॥ १ ॥

उवाच राजा सर्वज्ञः सर्ववानरसत्तमः ।
वाक्यमात्महितं चैव रामस्य च हितं तथा ॥ २ ॥

वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् ।
वैवस्वतसुतैः सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३ ॥

दिशं ह्युदीचीं विक्रान्तां हिमशैलावतंसकाम् ।
सर्वतः परिमार्गध्वं रामपत्नीमनिन्दिताम् ॥ ४ ॥

अस्मिन्कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये ।
ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वराः ॥ ५ ॥

कृतं हि प्रियमस्माकं राघवेण महात्मना ।
तस्यैतत्प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६ ॥

अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् ।
तस्य स्यात्सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७ ॥

एतां बुद्धिमवस्थाय दृश्यते जानकी यथा ।
तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८ ॥

अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः ।
अस्मासु चागतप्रीती रामः परपुरञ्जयः ॥ ९ ॥

इमानि वनदुर्गाणि नद्यः शैलान्तराणि च ।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १० ॥

तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च ।
प्रस्थलान्भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११ ॥

काम्बोजान्यवनांश्चैव शकानारट्टकानपि ।
बाह्लीकानृषिकांश्चैव पौरवानथ टङ्कणान् ॥ १२ ॥

चीनान्परमचीनांश्च निहारांश्च पुनः पुनः ।
अन्विष्य दरदांश्चैव हिमवन्तं विचिन्वथ ॥ १३ ॥

लोध्रपद्मकषण्डेषु देवदारुवनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १४ ॥

ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम् ।
कालं नाम महासानुं पर्वतं तु गमिष्यथ ॥ १५ ॥

महत्सु तस्य शैलस्य निर्दरेषु गुहासु च ।
विचिनुध्वं महाभागां रामपत्नीं ततस्ततः ॥ १६ ॥

तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततः सुदर्शनं नाम गन्तुमर्हथ पर्वतम् ॥ १७ ॥

ततो देवसखो नाम पर्वतः पतगालयः ।
नानापक्षिगणाकीर्णो विविधद्रुमभूषितः ॥ १८ ॥

तस्य कानन षण्डेषु निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९ ॥

तमतिक्रम्य चाकाशं सर्वतः शतयोजनम् ।
अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ २० ॥

तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ।
कैलासं पाण्डुरं शैलं प्राप्य हृष्टा भविष्यथ ॥ २१ ॥

तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् ।
कुबेरभवनं रम्यं निर्मितं विश्वकर्मणा ॥ २२ ॥

विशाला नलिनी यत्र प्रभूतकमलोत्पला ।
हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ॥ २३ ॥

तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः ।
धनदो रमते श्रीमान् गुह्यकैः सह यक्षराट् ॥ २४ ॥

तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २५ ॥

क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् ।
अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ॥ २६ ॥

वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
देवैरप्यर्चिताः सम्यग्देवरूपा महर्षयः ॥ २७ ॥

क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च ।
निर्झराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २८ ॥

क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः ।
अवृक्षं कामशैलं च मानसं विहगालयम् ॥ २९ ॥

न गतिस्तत्र भूतानां देवदानवरक्षसाम् ।
स च सर्वैर्विचेतव्यः पर्वतो बहुकन्दरः ॥ ३० ॥

क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ।
मयस्य भवनं तत्र दानवस्य स्वयं कृतम् ॥ ३१ ॥

मैनाकस्तु विचेतव्यः ससानुप्रस्थभूतलः ।
स्त्रीणामश्वमुखीनां च निकेतास्तत्र तत्र तु ॥ ३२ ॥

तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ।
सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥ ३३ ॥

वन्द्यास्ते तु तपःसिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ ३४ ॥

हेमपुष्करसंछन्नं तस्मिन्वैखानसं सरः ।
तरुणादित्यसङ्काशैर्हंसैर्विचरितं शुभैः ॥ ३५ ॥

औपवाह्यः कुबेरस्य सार्वभौम इति श्रुतः ।
गजः पर्येति तं देशं सदा सह करेणुभिः ॥ ३६ ॥

तत्सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
अनक्षत्रगणं व्योम निष्पयोदमनादिमत् ॥ ३७ ॥

गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते ।
विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३८ ॥

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ॥ ३९ ॥
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ।
तैश्च यान्ति परं पारं सिद्धान्प्रत्यानयन्ति च ॥ ४० ॥

उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ४१ ॥

ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः ।
नीलवैडूर्यपत्राभिर्नद्यस्तत्र सहस्रशः ॥ ४२ ॥

रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयैः ।
तरुणादित्यसदृशैर्भान्ति तत्र जलाशयाः ॥ ४३ ॥

महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलनीरजषण्डैश्च स देशः सर्वतो वृतः ॥ ४४ ॥

निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ।
उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ ४५ ॥

सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ।
जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४६ ॥

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसस्पर्शाः सर्वकामान् स्रवन्ति च ॥ ४७ ॥

नानारूपाणि वासांसि फलन्त्यन्ये नगोत्तमाः ॥ ४८ ॥

महार्हाणि च चित्राणि हैमान्यन्ये नगोत्तमाः ।
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ४९ ॥

मनःकान्तानि माल्यानि फलन्त्यन्ये नगोत्तमाः ।
मुक्तावैडूर्यचित्राणि भूषणाणि तथैव च ॥ ५० ॥

स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च ।
सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥
पानानि च महर्हाणि भक्ष्याणि विविधानि च ॥ ५१ ॥

स्त्रियश्च गुणसम्पन्ना रूपयौवनलक्षिताः ।
गन्धर्वाः किन्नराः सिद्धाः नागा विद्याधरास्तथा ॥
रमन्तें सहितास्तत्र नारीभिर्भास्करप्रभाः ॥ ५२ ॥

सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
सर्वे कामार्थसहिता वसन्ति सहयोषितः ॥ ५३ ॥

गीतवादित्रनिर्घोषः सोत्कृष्टहसितस्वनः ।
श्रूयते सततं तत्र सर्वभूतमनोहरः ॥ ५४ ॥

तत्र नामुदितः कश्चिन्नास्ति कश्चिदसत्प्रियः ।
अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥ ५५ ॥

समतिक्रम्य तं देशमुत्तरः पयसां निधिः ॥ ५६ ॥

तत्र सोमगिरिर्नाम मध्ये हेममयो महान् ।
इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ॥
देवास्तं समवेक्षन्ते गिरिराजं दिवं गतम् ॥ ५७ ॥

स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ।
सूर्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता ॥ ५८ ॥

भगवांस्तत्र विश्वात्मा शम्भुरेकादशात्मकः ।
ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥ ५९ ॥

न कथञ्चन गन्तव्यं कुरूणामुत्तरेण वः ।
अन्येषामपि भूतानां नातिक्रामति वै गतिः ॥ ६० ॥

स हि सोमगिरिर्नाम देवानामपि दुर्गमः ।
तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ ॥ ६१ ॥

एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६२ ॥

सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ।
यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥ ६३ ॥

ततः कृतं दाशरथेर्महत्प्रियं
महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमाः
विदेहजादर्शनजेन कर्मणा ॥ ६४ ॥

ततः कृतार्थाः सहिताः सबान्धवाः
मयार्चिताः सर्वगुणैर्मनोरमैः ।
चरिष्यथोर्वी प्रतिशान्तशत्रवः
सहप्रिया भूतधराः प्लवङ्गमाः ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11167 किष्किन्धाकाण्डे आदितः श्लोकाः 1915

## चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

### हनुमद्धस्तेऽङ्गुलीयकदानम् ॥

विशेषेण तु सुग्रीवो हनुमत्यर्थमुक्तवान् ।
स हि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः प्रभुः सर्ववनौकसाम् ॥ २ ॥

न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये ।
नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ॥ ३ ॥

सासुराः सहगन्धर्वाः सनागनरदेवताः ।
विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४ ॥

गतिर्वेगश्च तेजश्च लाघवं च महाकपे ।
पितुस्ते सदृशं वीर मारुतस्य महौजसः ॥ ५ ॥

तेजसा वापि ते भूतं समं भुवि न विद्यते ।
तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥ ६ ॥

त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्च नयपण्डित ॥ ७ ॥

ततः कार्यसमासङ्गमवगम्य हनूमति ।
विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८ ॥

सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः ।
निश्चितार्थकरश्चापि हनुमान्कार्यसाधने ॥ ९ ॥

तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १० ॥

तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् ।
कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ११ ॥

ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥

अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नाऽनुपश्यति ॥ १३ ॥

व्यवसायश्च ते वीर सत्त्वयुक्तश्च विक्रमः ।
सुग्रीवस्य च सन्देशः सिद्धिं कथयतीव मे ॥ १४ ॥

स तं गृह्य हरिश्रेष्ठः स्थाप्य मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगोत्तमः ॥ १५ ॥

स तत्प्रकर्षन्हरिणां बलं महद्बभूववीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः शशीव नक्षत्रगणोपशोभितः॥

अतिबल बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः ।
पवनसुत यथाभिगम्यते सा जनकसुता हनुमंस्तथा कुरुष्व ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11184 किष्किन्धाकाण्डे आदितः श्लोकाः 1932

## पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

### सीतान्वेषणाय वानरसेनाप्रस्थानम् ॥

सर्वांश्चाहूय सुग्रीवः प्लवगान्प्लवगर्षभः ।
समस्तानब्रवीद्भूयो रामकार्यार्थसिद्धये ॥
एवमेतद्विचेतव्यं यन्मया परिकीर्तितम् ॥ १ ॥

तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ।
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ॥ २ ॥

रामः प्रस्रवणे तस्मिन् न्यवसत्सहलक्ष्मणः ।
प्रतीक्षमाणस्तं मासं यः सीताधिगमे कृतः ॥ ३ ॥

उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ।
प्रतस्थे सहसा वीरो हरिः शतबलिस्तदा ॥ ४ ॥

पूर्वां दिशं प्रति ययौ विनतो नाम यूथपः । ॥ ५ ॥

अगस्त्यचरितामाशां दक्षिणां हरियूथपः ।
ताराङ्गदादिसहितो हनुमान् मारुतात्मजः ॥ ६ ॥

पश्चिमां तु भृशं घोरां सुषेणः प्लवगेश्वरः ।
प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ७ ॥

ततः सर्वा दिशो राजा चोदयित्वा यथातथम् ।
कपिसेनापतीन्मुख्यान्मुमोद सुखितः सुखम् ॥ ८ ॥

एवं संचोदिताः सर्वे राज्ञा वानरपुङ्गवाः ।
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ९ ॥

नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
क्ष्वेलन्तो धावमानाश्च ययुः प्लवगसत्तमाः ॥
आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ॥ १० ॥

अहमेको वधिष्यामि प्राप्तं रावणमाहवे ॥ ११ ॥

ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ॥ १२ ॥

वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिति ।
एक एवाहरिष्यामि पातालादपि जानकीम् ॥ १३ ॥

विमथिष्याम्यहं वृक्षान्दारयिष्याम्यहं गिरीन् ।
धरणीं दारयिष्यामि क्षोभयिष्यामि सागरान् ॥ १४ ॥

अहं योजनसङ्ख्यायाः प्लविता नात्र संशयः ।
शतं योजनसङ्ख्यायाः शतं समधिकं ह्यहम् ॥ १५ ॥

भूतले सागरे वाऽपि शैलेषु च वनेषु च ।
पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ॥ १६ ॥

इत्येकैकं तदा तत्र वानरा बलदर्पिताः ।
ऊचुश्च वचनं तस्मिन् हरिराजस्य सन्निधौ ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11201 किष्किन्धाकाण्डे आदितः श्लोकाः 1949

## षट्चत्वारिंशः सर्गः ॥ ४६ ॥

### भूवलयविज्ञानकारणकथनम् ॥

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ।
कथं भवान् विजानीते सर्वं वै मण्डलं भुवः ॥ १ ॥

सुग्रीवस्तु ततो राममुवाच प्रणतात्मवान् ।
श्रूयतां सर्वमाख्यास्ये विस्तरेण नरर्षभ ॥ २ ॥

यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् ।
परिकालयते वाली मलयं प्रति पर्वतम् ॥
तदा विवेश महिषो मलयस्य गुहां प्रति ॥ ३ ॥

विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४ ॥

ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् ॥ ५ ॥

न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ६ ॥

ततः क्षतजवेगेन आपुपूरे तदा बिलम् ।
तदहं विस्मितो दृष्ट्वा भ्रातृशोकविषार्दितः ॥
अथाहं गतबुद्धिस्तु सुव्यक्तं निहतो गुरुः ॥ ७ ॥

शिला पर्वतसङ्काशा बिलद्वारि कृता मया ।
अशक्नुवन्निष्क्रमितुं महिषो विनशिष्यति ॥ ८ ॥

ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते ।
राज्यं च सुमहत्प्राप्तं तारया रुमया सह ॥ ९ ॥

मित्रैश्च सहितस्तत्र वसामि विगतज्वरः ॥ १० ॥

आजगाम ततो वाली हत्वा तं दानवर्षभम् ॥ ११ ॥

ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ॥ १२ ॥

स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः ।
परिकालयते क्रोधाद्धावन्तं सचिवैः सह ॥ १३ ॥

ततोऽहं वालिना तेन सानुबन्धः प्रधावितः ।
नदीश्च विविधाः पश्यन् वनानि नगराणि च ॥ १४ ॥

आदर्शतलसङ्काशा ततो वै पृथिवी मया ।
अलातचक्रप्रतिमा दृष्टा गोष्पदवत्तदा ॥ १५ ॥

पूर्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान् ।
पर्वतांश्च नदी रम्याः सरांसि विविधानि च ॥ १६ ॥

उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् ।
क्षीरोदं सागरं चापि नित्यमप्सरसालयम् ॥
परिकालयमानस्तु वालिनाऽभिद्रुतस्तदा ॥ १७ ॥

पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ।
पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम् ॥ १८ ॥

दिशस्त्वस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् ।
विन्ध्यपादपसङ्कीर्णां चन्दनद्रुमशोभिताम् ॥ १९ ॥

द्रुमशैलांस्ततः पश्यन् भूयो दक्षिणतोऽपरान् ।
पश्चिमां तु दिशं प्राप्तो वालिना समभिद्रुतः ॥
संपश्यन् विविधान् देशानस्तं च गिरिसत्तमम् ॥ २० ॥

प्राप्य चास्तं गिरिश्रेष्ठमुत्तरां संप्रधावितः ।
हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ॥ २१ ॥

यदा न विन्दं शरणं वालिना समभिद्रुतः ।
तदा मां बुद्धिसम्पन्नो हनुमान् वाक्यमब्रवीत् ॥ २२ ॥

इदानीं मे स्मृतं राजन्यथा वाली हरीश्वरः ।
मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले ॥ २३ ॥

प्रविशेद्यदि वै वाली मूर्धाऽस्य शतधा भवेत् ।
तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति ॥ २४ ॥

ततः पर्वतमासाद्य ऋश्यमूकं नृपात्मज ।
न विवेश तदा वाली मतङ्गस्य भयात्तु सः ॥ २५ ॥

एवं मया तदा राजन् प्रत्यक्षमुपलक्षितम् ।
पृथिवीमण्डलं कृत्स्नं गुहामस्यागतस्ततः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11227 किष्किन्धाकाण्डे आदितः श्लोकाः 1975

## सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

### पूर्वोत्तरपश्चिमदिग्भ्यो वानरसेना प्रत्यागमनम् ॥

दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १ ॥

सरांसि सरितः कक्षानाकाशं नगराणि च ।
नदीदुर्गांस्तथा शैलान् विचिन्वन्ति समन्ततः ॥ २ ॥

सुग्रीवेण समाख्यातान् सर्वे वानरपुङ्गवाः ।
प्रदेशान् प्रविचिन्वन्ति सशैलवनकाननान् ॥ ३ ॥

विचित्य दिवसं सर्वे सीताधिगमने धृताः ।
समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४ ॥

सर्वर्तुकामान् देशेषु वानराः सफलद्रुमान् ।
आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहस्सु ते ॥ ५ ॥

तदहः प्रथमं कृत्वा मासे प्रस्रवणाचले ।
कपिराजेन संगम्य निराशाः कपियूथपाः ॥ ६ ॥

विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ।
अदृष्ट्वा विनतः सीतामाजगाम महाबलः ॥ ७ ॥

उत्तरां तु दिशं सर्वां विचित्य स महाकपिः ।
आगतः सह सैन्येन वीरः शतबलिस्तदा ॥ ८ ॥

सुषेणः पश्चिमामाशां विचित्य सह वानरैः ।
समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥ ९ ॥

तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥

विचिताः पर्वताः सर्वे वनानि गहनानि च ।
निम्नगाः सागराश्चैव सर्वे जनपदास्तथा ॥ ११ ॥

गुहाश्च विचिताः सर्वास्त्वया याः परिकीर्तिताः ।
विचिताश्च महागुल्मा लताविततसंतताः ॥ १२ ॥

गहनेषु च देशेषु दुर्गेषु विषमेषु च ।
सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥ १३ ॥

ये चैव गहना देशा विचितास्ते पुनः पुनः ॥ १४ ॥

उदारसत्त्वाभिजनो महात्मा
स मैथिलीं द्रक्ष्यति वानरेन्द्रः ।
दिशं तु यामेव गता तु सीता
तां प्रस्थितो वायुसुतो हनूमान् ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11242 किष्किन्धाकाण्डे आदितः श्लोकाः 1990

अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

विन्ध्यगुहासु सीतान्वेषणम् ॥

सह ताराङ्गदाभ्यां तु स गत्वा हनुमान्कपिः ।
सुग्रीवेण यथोद्दिष्टं तं तं देशं प्रचक्रमे ॥ १ ॥

स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥

पर्वताग्रान्नदीदुर्गान्सरांसि विपुलान्द्रुमान् ।
वृक्षषण्डांश्च विविधान्पर्वतान् घनपादपान् ॥ ३ ॥

अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ।
न सीतां ददृशुः सर्वे मैथिलीं जनकात्मजाम् ॥ ४ ॥

ते भक्षयन्तो मूलानि फलानि विविधानि च ।
अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह ॥
स तु देशो दुरन्वेषो गुहागहनवान्महान् ॥ ५ ॥

निर्जलं निर्जनं शून्यं गहनं रोमहर्षणम् ।
त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः ॥ ६ ॥

तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः ।
देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ॥ ७ ॥

यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः ।
निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥ ८ ॥

न सन्ति महिषा यत्र न मृगा न च हस्तिनः ।
शार्दूलाः पक्षिणो वाऽपि ये चान्ये वनगोचराः ॥ ९ ॥

न यत्र वृक्षा नौषध्यो न वल्ल्यो नापि वीरुधः ॥१०॥

स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ।
प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्च विवर्जिताः ॥ ११ ॥

कण्डुर्नाम महाभागः सत्यवादी तपोधनः ।
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ १२ ॥

तस्य तस्मिन्वने पुत्रो बालः षोडशवार्षिकः ।
प्रनष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥ १३ ॥

तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् ।
अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम् ॥ १४ ॥

तस्य ते काननान्तांश्च गिरीणां कन्दराणि च ।
प्रभवानि नदीनां च विचिन्वन्ति समाहिताः ॥ १५ ॥

तत्र चापि महात्मानो नापश्यञ्जनकात्मजाम् ।
हर्तारं रावणं चापि सुग्रीवप्रियकारिणः ॥ १६ ॥

ते प्रविश्य तु तं भीमं लतागुल्मसमावृतम् ।
ददृशुः क्रूरकर्माणमसुरं सुरनिर्भयम् ॥ १७ ॥

तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवापरम् ।
गाढं परिहिताः सर्वे दृष्ट्वा तं पर्वतोपमम् ॥ १८ ॥

सोऽपि मारीचतनयः सद्यः प्राप्तानमन्यत ।
अथैनान् त्रासदीप्ताक्षान् समवेतानभिद्रवत् ॥ १९ ॥

सोऽपि तान्वानरान्सर्वान्नष्टाः स्थेत्यब्रवीद्बली ।
अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य संहितम् ॥ २० ॥

तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ।
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ २१ ॥

स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् ।
असुरोऽभ्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २२ ॥

तेऽपि तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः ।
व्यचिन्वन्प्रायशस्तत्र सर्वं तद्गिरिगह्वरम् ॥ २३ ॥

विचितं तु ततः कृत्वा सर्वे ते काननं पुनः ।
अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ॥ २४ ॥

ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 11267 किष्किन्धाकाण्डे आदितः श्लोकाः 2015

## एकोनपञ्चाशः सर्गः ॥ ४९ ॥

अङ्गदाज्ञया रजतपर्वतादिष्वन्वेषणम् ॥

अथाङ्गदस्तदा सर्वान्वानरानिदमब्रवीत् ।
परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ॥ १ ॥

वनानि गिरयो नद्यो दुर्गाणि गहनानि च ।
दरीगिरिगुहाश्चैव विचितानि समन्ततः ॥ २ ॥

तत्र तत्र सहास्माभिर्जानकी न च दृश्यते ।
तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३ ॥

काळश्च नो महान्यातः सुग्रीवश्चोग्रशासनः ।
तस्माद्भवन्तः सहिता विचिन्वन्तु समन्ततः ॥ ४ ॥

विहाय तन्द्रीं शोकं च निद्रां चैव समुत्थिताम् ।
विचिनुध्वं यथा सीतां पश्यामो जनकात्मजाम् ॥ ५ ॥

अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम् ।
कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥

अद्यापि तद्वनं दुर्गं विचिन्वन्तु वनौकसः ।
खेदं त्यक्त्वा पुनः सर्वैर्वनमेतद्विचीयताम् ॥ ७ ॥

अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् ।
अलं निर्वेदमागम्य न हि नोन्मीलनं क्षमम् ॥ ८ ॥

सुग्रीवः कोपनो राजा तीक्ष्णदण्डश्च वानरः ।
भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९ ॥

हितार्थमेतदुक्तं वः क्रियतां यदि रोचते ।
उच्यतां वा क्षमं यन्नः सर्वेषामेव वानराः ॥ १० ॥

अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः ।
उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥

सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह ।
हितं चैवानुरूपं च क्रियतामस्य भाषितम् ॥ १२ ॥

पुनर्मार्गामहै शैलान्कन्दरांश्च दरीस्तथा ।
काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥

यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि सर्वशः ॥ १४ ॥
ततः समुत्थाय पुनर्वानरास्ते महाबलाः ।
विन्ध्यकाननसङ्कीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥
ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् ।
शृङ्गवन्तं दरीमन्तमधिरुह्य च वानराः ॥ १६ ॥
तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च ।
व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७ ॥
तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः ।
न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८ ॥
ते तु दृष्टिगतं कृत्वा तं शैलं बहुकन्दरम् ।
अवारोहन्त हरयो वीक्षमाणास्ततस्ततः ॥ १९ ॥
अवरुह्य ततो भूमिं श्रान्ता विगतचेतसः ।
स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥
ते मुहूर्तं समाश्वस्ताः किञ्चिद्भग्नपरिश्रमाः ।
पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१ ॥
हनुमत्प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः ।
विन्ध्यमेवादितस्तावद्विचेरुस्ते ततस्ततः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11289 किष्किन्धाकाण्डे आदितः श्लोकाः 2037

## पञ्चाशः सर्गः ॥ ५० ॥

### ऋक्षबिलप्रवेशः स्वयंप्रभादर्शनं च ॥

सह ताराङ्गदाभ्यां तु सङ्गम्य हनुमान्कपिः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥

सिंहशार्दूलजुष्टेषु शिलाश्च सरितस्तथा ।
विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २ ॥

आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् ।
तेषां तत्रैव वसतां स कालोऽप्यत्यवर्तत ॥ ३ ॥

स हि देशो दुरन्वेषो गुहागहनवान्महान् ॥ ४ ॥

तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम् ।
परस्परेण हनुमानन्योन्यस्याविदूरतः ॥ ५ ॥

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवान्नलः ॥ ६ ॥

अङ्गदो युवराजश्च तारश्च वनगोचरः ।
गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम्
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७ ॥

दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् ।
क्षुत्पिपासापरीतास्तु श्रान्ताश्च सलिलार्थिनः ॥
अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् ॥ ८ ॥

ततः क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् ।
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ॥ ९ ॥

ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ।
विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः ॥ १० ॥

संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ।
अभ्यपद्यन्नसंहृष्टास्तेजोवन्तो महाबलाः ॥ ११ ॥

नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ।
दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः ॥ १२ ॥

ततः पर्वतकूटाभो हनुमान्पवनात्मजः ।
अब्रवीद्वानरान्सर्वान्कान्तारवनकोविदः ॥ १३ ॥

गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् ।
वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् ॥ १४ ॥

अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः ।
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वशः ॥ १५ ॥

नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ।
तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः ॥ १६ ॥

इत्युक्त्वा तद्बिलं सर्वे विविशुस्तिमिरावृतम् ।
अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् ॥ १७ ॥

निशाम्य तस्मात्सिंहांश्च व्याघ्रांश्च मृगपक्षिणः ।
प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् ॥ १८ ॥

न तेषां सज्जते चक्षुर्न तेजो न पराक्रमः ।
वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ॥ १९ ॥

ते प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः ।
प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् ॥ २० ॥

ततस्तस्मिन्बिले दुर्गे नानापादपसंकुले ।
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ॥ २१ ॥

ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ।
परिपेतुर्बिले तस्मिन् कश्चित्कालमतन्द्रिताः ॥ २२ ॥

ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ।
आलोकं ददृशुर्वीरा निराशा जीविते तदा ॥ २३ ॥

ततस्तं देशमागम्य सौम्यं वितिमिरं वनम् ।
ददृशुः काञ्चनान्वृक्षान्दीप्तवैश्वानरप्रभान् ॥ २४ ॥

सालांस्तालांश्च पुन्नागान्ककुभान्वञ्जुलान्धवान् ।
चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ॥ २५ ॥

स्तबकैः काञ्चनैश्चित्रै रक्तैः किसलयैस्तथा ।
आपीडैश्च लताभिश्च हेमाभरणभूषितान् ॥ २६ ॥

तरुणादित्यसङ्काशान्वैडूर्यमयवेदिकान् ।
विभ्राजमानान्वपुषा पादपांश्च हिरण्मयान् ॥ २७ ॥

नीलवैडूर्यवर्णाश्च पद्मिनीः पतगावृताः ।
महद्भिः काञ्चनैः पद्मैर्वृता बालार्कसंनिभैः ॥ २८ ॥

जातरूपमयैर्मत्स्यैर्महद्भिश्च सकच्छपैः ।
नलिनीस्तत्र ददृशुः प्रसन्नसलिलायुताः ॥ २९ ॥

काञ्चनानि विमानानि राजतानि तथैव च ।
तपनीयगवाक्षाणि मुक्ताजालावृतानि च ॥ ३० ॥

हैमराजतभौमानि वैडूर्यमणिमन्ति च ।
ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः ॥ ३१ ॥

पुष्पितान्फलिनो वृक्षान्प्रवालमणिसंनिभान् ।
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः ॥ ३२ ॥

मणिकाञ्चनचित्राणि शयनान्यासनानि च ।
महार्हाणि च यानानि ददृशुस्ते समन्ततः ॥ ३३ ॥

हैमराजतकांस्यानां भाजनानां च सञ्चयान् ।
अगरूणां च दिव्यानां चन्दनानां च सञ्चयान् ॥ ३४ ॥

शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
महार्हाणि च पानानि मधूनि रसवन्ति च ॥ ३५ ॥

दिव्यानामम्बराणां च महार्हाणां च सञ्चयान् ।
कम्बलानां च चित्राणामजिनानां च सञ्चयान् ॥ ३६ ॥

तत्र तत्र च विन्यस्तान्दीप्तान्वैश्वानरोपमान् ।
ददृशुर्वानराः शुभ्राञ्जातरूपस्य सञ्चयान् ॥ ३७ ॥

तत्र तत्र विचिन्वन्तो बिले तस्मिन्महाबलाः ।
ददृशुर्वानराः शूराः स्त्रियं काञ्चिददूरतः ॥ ३८ ॥

तां दृष्ट्वा हरयस्तत्र चीरकृष्णाजिनाम्बराम् ।
तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥ ३९ ॥

विस्मिता हरयस्तत्र व्यवातिष्ठन्त सर्वशः ॥ ४० ॥

ततो हनूमान् गिरिसन्निकाशः
कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।
पप्रच्छ का त्वं भवनं बिलं च
रत्नानि चैतानि वदस्व कस्य ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥

आदितः श्लोकाः 11330 किष्किन्धाकाण्डे आदितः श्लोकाः 2078

इति पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे गीते
श्रीमद्रामायणे पञ्चदशेऽह्नि वर्तमानकथाप्रसङ्गः

[पुरा कुशलवाभ्यां श्रीरामसन्निधौ अश्वमेधयज्ञवाटे
षोडशेऽह्नि किष्किन्धाकाण्डे एकपञ्चाशसर्गमारभ्य
सप्तषष्टितमसर्गपर्यन्तं (11331—11790 श्लोकाः)
गीतम् । तस्मिन् दिने गीताः श्लोकाः 460.]

## एकपञ्चाशः सर्गः ॥ ५१ ॥

स्वयंप्रभाकृतमातिथ्यम् ॥

इत्युक्त्वा हनुमांस्तत्र पुनः कृष्णाजिनाम्बराम् ।
अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १ ॥

इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ।
क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥
महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः ॥ २ ॥

इमांस्त्वेवंविधान्भावान्विविधानद्भुतोपमान् ।
दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता नष्टचेतसः ॥ ३ ॥

कस्येमे काञ्चना वृक्षास्तरुणादित्यसन्निभाः ।
इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥ ४ ॥

शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ५ ॥

तपनीयगवाक्षाणि मणिजालावृतानि च ।
काञ्चनानि च पद्मानि जातानि विमले जले ॥ ६ ॥

कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः ॥ ७ ॥

आत्मानमनुभावं च कस्य चैतत्तपोबलम् ।
अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि ॥ ८ ॥

एवमुक्ता हनुमता तापसी धर्मचारिणी ।
प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥ ९ ॥

मयो नाम महातेजा मायावी दानवर्षभः ।
तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥ १० ॥

पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ।
येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ॥ ११ ॥

स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
पितामहाद्वरं लेभे सर्वमौशनसं धनम् ॥ १२ ॥

वनं विधाय बलवान्सर्वकामेश्वरस्तदा ।
उवास सुखितः कालं कञ्चिदस्मिन्महावने ॥ १३ ॥

तमप्सरसि हेमायां सक्तं दानवसत्तमम् ।
विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ॥ १४ ॥

इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ।
शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ॥ १५ ॥

दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा ।
इदं रक्षामि भवनं हेमाया वानरोत्तम ॥ १६ ॥

मम प्रियसखी हेमा नृत्तगीतविशारदा ।
तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् ॥ १७ ॥

किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपश्यथ ।
कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ॥ १८ ॥

इमान्यभ्यवहार्याणि मूलानि च फलानि च ।
भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11349 किष्किन्धाकाण्डे आदितः श्लोकाः 2097

## द्विपञ्चाशः सर्गः ॥ ५२ ॥

### बिलप्रवेशकारणकथनम् ॥

अथ तानब्रवीत्सर्वान्विश्रान्तान् हरियूथपान् ।
इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १ ॥
वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥ २ ॥
तस्यास्तद्वचनं श्रुत्वा हनुमान्मारुतात्मजः ।
आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥
लक्ष्मणेन सह भ्राता वैदेह्या चापि भार्यया ॥ ४ ॥
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५ ॥
वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥
अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् ।
सहैभिर्वानरैर्मुख्यैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् ।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८ ॥
विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् ।
बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥ ९ ॥
विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः ।
नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥

चारयन्तस्ततश्चक्षुर्दृष्टवन्तो वयं बिलम् ।
लतापादपसंच्छन्नं तिमिरेण समावृतम् ॥ ११ ॥

अस्मान्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः ।
कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥ १२ ॥

साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ॥ १३ ॥

तेषामपि हि सर्वेषामनुमानमुपागतम् ।
गच्छाम प्रविशामेति भर्तृकार्यत्वरान्विताः ॥ १४ ॥

ततो गाढं निपतिता गृह्य हस्तौ परस्परम् ।
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥ १५ ॥

एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ १६ ॥

आतिथ्यधर्मदत्तानि मूलानि च फलानि च ।
अस्माभिरुपभुक्तानि बुभुक्षापरिपीडितैः ॥ १७ ॥

यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया ।
ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥ १८ ॥

एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयंप्रभा ।
प्रत्युवाच ततः सर्वानिदं वानरयूथपान् ॥ १९ ॥

सर्वेषां परितुष्टाऽस्मि वानराणां तरस्विनाम् ।
चरन्त्या मम धर्मेण न कार्यमिह केनचित् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11369 किष्किन्धाकाण्डे आदितः श्लोकाः 2117

## त्रिपञ्चाशः सर्गः ॥ ५३ ॥

### प्रायोपवेशनिर्धारणम् ॥

एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् ।
उवाच हनुमान्वाक्यं तामनिन्दितचेष्टिताम् ॥ १ ॥

शरणं त्वां प्रपन्नाः स्मः सर्वे वै धर्मचारिणि ।
यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ॥ २ ॥

स तु कालो व्यतिक्रान्तो बिले च परिवर्तताम् ।
सा त्वमस्माद्बिलाद्घोरादुत्तारयितुमर्हसि ॥ ३ ॥

तस्मात्सुग्रीववचनादतिक्रान्तान्गतायुषः ।
त्रातुमर्हसि नः सर्वान्सुग्रीवभयशङ्कितान् ॥ ४ ॥

महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ।
तच्चापि न कृतं कार्यमस्माभिरिह वासिभिः ॥ ५ ॥

एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ॥ ६ ॥

जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ७ ॥

तपसस्तु प्रभावेन नियमोपार्जितेन च ।
सर्वानेव बिलादस्मादुद्धरिष्यामि वानरान् ॥ ८ ॥

निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः ।
न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥ ९ ॥

ततः संमीलिताः सर्वे सुकुमाराङ्गुलैः करैः ।
सहसाऽपिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षिणः ॥ १० ॥

वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा ।
निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥ ११ ॥

ततस्तान्वानरान्सर्वांस्तापसी धर्मचारिणी ।
निःसृतान्विषमात्तस्मात्समाश्वास्येदमब्रवीत् ॥ १२ ॥

एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलताकुलः ।
एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥ १३ ॥

स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः ।
इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ॥ १४ ॥

ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ।
अपारमभिगर्जन्तं घोरैरूर्मिभिरावृतम् ॥ १५ ॥

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥१६॥

विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे ।
उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥ १७ ॥

ततः पुष्पातिभाराग्राँल्लताशतसमावृतान् ।
द्रुमान्वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः ॥ १८ ॥

ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम् ।
नष्टसंदेशकालार्था निपेतुर्धरणीतले ॥ १९ ॥

ततस्तान्कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः ।
वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ २० ॥

स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः ।
युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ २१ ॥

शासनात्कपिराजस्य वयं सर्वे विनिर्गताः ।
मासः पूर्णो बिलस्थानां हरयः किं न बुध्यते ॥ २२ ॥

वयमाश्वयुजे मासि कालसंख्याव्यवस्थिताः ।
प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ २३ ॥

भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः ।
हितेष्वभिरता भर्तुर्निविष्टाः सर्वकर्मसु ॥ २४ ॥

कर्मस्वप्रतिमाः शूरा दिक्षु विश्रुतपौरुषाः ।
मां पुरस्कृत्य निर्याताः पिङ्गाक्षेशप्रचोदिताः ॥ २५ ॥

इदानीमकृतार्थानां मर्तव्यं नात्र संशयः ।
हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ॥ २६ ॥

तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् ।
प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ २७ ॥

तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः ।
न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥ २८ ॥

अप्रवृत्तौ च सीतायाः पापमेव करिष्यति ।
तस्मात्क्षममिहाद्यैव हितं प्रायोपवेशनम् ॥
त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ २९ ॥

यावन्नो घातयेद्राजा सर्वान् प्रतिगतानितः ।
वधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः ॥ ३० ॥

न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ।
नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा ॥ ३१ ॥

स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् ।
घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः ॥ ३२ ॥

किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ।
इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥ ३३ ॥

एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् ।
सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ ३४ ॥

तीक्ष्णः प्रकृत्या सुग्रीवः प्रियारक्तश्च राघवः ।
समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते ॥
अदृष्टायां तु वैदेह्यां दृष्ट्वास्मांश्च समागतान् ॥ ३५ ॥

राघवप्रियकामार्थं घातयिष्यत्यसंशयम् ।
न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः ॥ ३६ ॥

इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य च ।
नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ ३७ ॥

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे ।
अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥

ह्रदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम् ।
इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥

श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।
यथा न हिंस्येम तथा विधानमसक्तमद्यैव विधीयतां नः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11409 किष्किन्धाकाण्डे आदितः श्लोकाः 2157

## चतुःपञ्चाशः सर्गः ॥ ५४ ॥

### हनुमताऽङ्गदभीषणम् ॥

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।
अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १ ॥

बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ।
चतुर्दशगुणं मेने हनुमान्वालिनः सुतम् ॥ २ ॥

आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ।
शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३ ॥

बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः ।
शुश्रूषमाणं तारस्य शुक्रोरिव पुरन्दरम् ॥ ४ ॥

भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविशारदम् ।
अभिसंधातुमारेभे हनुमानङ्गदं ततः ॥ ५ ॥

स चतुर्णामुपायानां तृतीयमुपवर्णयन् ।
भेदयामास तान्सर्वान्वानरान्वाक्यसंपदा ॥ ६ ॥

तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ।
भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥ ७ ॥

त्वं समर्थतरः पित्रा युद्धे तारेय वै धुरम् ।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥

नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ।
नाज्ञाप्यं विसहिष्यन्ति पुत्रदारान्विना त्वया ॥ ९ ॥

त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते ।
यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ १० ॥

न ह्यहं त इमे सर्वे सामदानादिभिर्गुणैः ।
दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥

विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः ।
आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥

यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् ।
एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥ १३ ॥

स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा ।
लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥ १४ ॥

लक्ष्मणस्य च नाराचा बहवः सन्ति तद्विधाः ।
वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥ १५ ॥

अवस्थाने यदैव त्वमासिष्यसि परंतप।
तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः।
खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥
स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः।
तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥ १८ ॥
न च जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः।
अपावृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९ ॥
अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम्।
आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २० ॥
धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः।
शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥ २१ ॥
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम्।
तस्यापत्यं च [illegible]दङ्गद गम्यताम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11431 किष्किन्धाकाण्डे आदितः श्लोकाः 2179

## पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

### वानराणां प्रायोपवेशः ॥

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम्।
स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १ ॥

स्थैर्यमात्ममनःशौचमानृशंस्यमथार्जवम् ।
विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥

भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् ।
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३ ॥

कथं स धर्मं जानीते येन भ्रात्रा दुरात्मना ।
युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४ ॥

सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः ।
विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥ ५ ॥

लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा ।
आदिष्टा मार्गितुं सीतां धर्मस्तस्मिन्कथं भवेत् ॥ ६ ॥

तस्मिन्पापे कृतघ्ने तु स्मृतिहीने चलात्मनि ।
आर्यः को विश्वसेज्जातु तत्कुलीनो जिजीविषुः ॥ ७ ॥

राज्ये पुत्रः प्रतिष्ठाप्यः सगुणो निर्गुणोऽपि वा ।
कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥

भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् ।
किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९ ॥

उपांशु दण्डेन हि मां बन्धनेनोपपादयेत् ।
शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १० ॥

बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् ।
अनुजानीत मां सर्वे गृहान् गच्छन्तु वानराः ॥ ११ ॥

अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् ।
इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥ १२ ॥

अभिवादनपूर्वं तु राघवौ बलशालिनौ ।
अभिवादनपूर्वं तु राजा कुशलमेव च ॥
वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः ॥ १३ ॥

आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ १४ ॥

मातरं चैव मे तारामाश्वासयितुमर्हथ ॥ १५ ॥

प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ।
विनष्टं मामिह श्रुत्वा व्यक्तं हास्यति जीवितम् ॥ १६ ॥

एतावद्वचनं चोक्त्वा वृद्धानप्यभिवाद्य च ।
संविवेशाङ्गदो भूमौ रुदन्दर्भेषु दुर्मनाः ॥ १७ ॥

तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ।
नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ॥ १८ ॥

सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ।
परिवार्याङ्गदं सर्वे व्यवसन् प्रायमासितुम् ॥ १९ ॥

मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥ २० ॥

दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ।
मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह ॥ २१ ॥

रामस्य वनवासं च क्षयं दशरथस्य च ।
जनस्थानवधं चैव वधं चैव जटायुषः ॥ २२ ॥

हरणं चैव वैदेह्या वालिनश्च वधं रणे ।
रामकोपं च वदतां हरीणां भयमागतम् ॥ २३ ॥

एवं वदद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।
बभूव संनादितनिर्झरान्तरो भृशं नदद्भिर्जलदैरिवोल्बणैः॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11455 किष्किन्धाकाण्डे आदितः श्लोकाः 2203

## षट्पञ्चाशः सर्गः ॥ ५६ ॥

### अङ्गदसंपातीनो संवादः ॥

उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरिस्थले ।
हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥

संपातिर्नाम नाम्ना तु चिरञ्जीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान्प्रख्यातबलपौरुषः ॥ २ ॥

कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३ ॥

विधिः किल नरं लोके विधानेनानुवर्तते ।
यथाऽयं विहितो भक्ष्यश्चिरान्मह्यमिहागतः ॥ ४ ॥

परं पराणां भक्षिष्ये वानराणां मृतं मृतम् ।
उवाचैतद्वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ।
अङ्गदः परमायस्तो हनुमन्तमथाब्रवीत् ॥ ६ ॥

पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥

रामस्य न कृतं कार्यं राज्ञो न च वचः कृतम् ।
हरीणामियमज्ञाता विपत्तिः सहसाऽऽगता ॥ ८ ॥

वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा ।
गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥

तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम् ॥
अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ॥ १० ॥

ततस्तस्योपकारार्थं त्यजतात्मानमात्मना ।
प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ॥ ११ ॥

राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ।
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् ॥

स सुखी गृध्रराजस्तु रावणेन हतो रणे ।
मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम् ॥ १३ ॥

जटायुषो विनाशेन राज्ञो दशरथस्य च ।
हरणेन च वैदेह्याः संशयं हरयो गताः ॥ १४ ॥

रामलक्ष्मणयोर्वास अरण्ये सह सीतया ।
राघवस्य च बाणेन वालिनश्च तथा वधः ॥ १५ ॥

रामकोपादशेषाणां राक्षसानां तथा वधः ।
कैकेय्या वरदानेन इदं हि विकृतं कृतम् ॥ १६ ॥

तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान् ।
भृशचलितमतिर्महामतिः कृपणमुदाहृतवान्स गृध्रराट् ॥१७॥

तत्तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम् ।
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १८ ॥

कोऽयं गिरा घोषयति प्राणैः प्रियतमस्य मे ।
जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥ १९ ॥

कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ।
नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥ २० ॥

इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् ॥ २१ ॥

यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ।
अतिदीर्घस्य कालस्य परितुष्टोऽस्मि कीर्तनात् ॥ २२ ॥

तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ।
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ॥ २३ ॥

तस्यैव च मम भ्रातुः सखा दशरथः कथम् ।
यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः ॥ २४ ॥

सूर्यांशुदग्धपक्षत्वान्न शक्नोम्युपसर्पितुम् ।
इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥

आदितः श्लोकाः **11480** किष्किन्धाकाण्डे आदितः श्लोकाः **2228**

## सप्तपञ्चाशः सर्गः ॥ ५७ ॥

निखिलरामवृत्तान्तकथनम् ॥

शोकाद्भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः ।
श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥

ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः ।
चक्रुर्बुद्धिं तदा रौद्रां सर्वान्नो भक्षयिष्यति ॥ २ ॥

सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति ।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥ ३ ॥

एतां बुद्धिं ततश्चक्रुः सर्वे ते वानरर्षभाः ।
अवतार्य गिरेः शृङ्गाद्गृध्रमाहाङ्गदस्तदा ॥ ४ ॥

बभूवर्क्षरजो नाम वानरेन्द्रः प्रतापवान् ।
ममार्यः पार्थिवः पक्षिन्धार्मिकस्तस्य चात्मजौ ॥ ५ ॥

सुग्रीवश्चैव वाली च पुत्रावोघबलावुभौ ।
लोके विश्रुतकर्माऽभूद्राजा वाली पिता मम ॥ ६ ॥

राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः ।
रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥ ७ ॥

लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ।
पितुर्निर्देशनिरतो धर्म्यं पन्थानमाश्रितः ॥ ८ ॥

तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ९ ॥

रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ।
ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥ १० ॥

रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ।
परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ ११ ॥

एवं गृध्रो हतस्तेन रावणेन बलीयसा ।
संस्कृतश्चापि रामेण गतश्च गतिमुत्तमाम् ॥ १२ ॥

ततो मम पितृव्येण सुग्रीवेण महात्मना ।
चकार राघवः सख्यं सोऽवधीत्पितरं मम ॥ १३ ॥

मम पित्रा विरुद्धो हि सुग्रीवः सचिवैः सह ।
निहत्य वालिनं रामस्ततस्तमभ्यषेचयत् ॥ १४ ॥

स राज्ये स्थापितस्तेन सुग्रीवो वानरेश्वरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ १५ ॥

एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः ।
वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥ १६ ॥

ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ।
अज्ञानात्तु प्रविष्टाः स्म धरण्यां विवृतं बिलम् ॥ १७ ॥

मयस्य मायाविहितं तद्बिलं च विचिन्वताम् ।
व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥ १८ ॥

ते वयं कपिराजस्य सर्वे वचनकारिणः ।
कृतां संस्थामतिक्रान्ता भयात्प्रायमुपास्महे ॥ १९ ॥

क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे ।
गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11500 किष्किन्धाकाण्डे आदितः श्लोकाः 2248

## अष्टपञ्चाशः सर्गः ॥ ५८ ॥

### लङ्कायां सीतावस्थानप्रदर्शनम् ॥

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
सबाष्पो वानरान्गृध्रः प्रत्युवाच महास्वनः ॥ १ ॥

यवीयान्मम स भ्राता जटायुर्नाम वानराः ।
यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥

वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये ।
न हि मे शक्तिरद्यास्ति भ्रातुर्वैरविमोक्षणे ॥ ३ ॥

पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ ।
आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥

आवृत्याकाशमार्गेण जवेन स्वो गतौ भृशम् ।
मध्यं प्राप्ते सवितरि जटायुरवसीदति ॥ ५ ॥

तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरार्दितम् ।
पक्षाभ्यां छादयामास स्नेहात्परमविह्वलम् ॥ ६ ॥

निर्दग्धपक्षः पतितो विन्ध्येऽस्मिन् वानरोत्तमाः ।
अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७ ॥

जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा ।
युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥ ८ ॥

जटायुषो यदि भ्राता श्रुतं ते गदितं मया ।
आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९ ॥

अदीर्घदर्शिनं तं वा रावणं राक्षसेश्वरम् ।
अन्तिके यदि वा दूरे यदि जानासि शंस नः॥ १० ॥

ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः ।
आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥ ११ ॥

निर्दग्धपक्षो गृध्रोऽहं हीनवीर्यः प्लवङ्गमाः ।
वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ॥ १२ ॥

जानामि वारुणांल्लोकान्विष्णोस्त्रैविक्रमानपि ।
देवासुरविमर्दांश्च ह्यमृतस्यापि मन्थनम् ॥ १३ ॥

रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया ।
जरयाऽपहृतं तेजः प्राणाश्च शिथिला मम ॥ १४ ॥

तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥

क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी ।
भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥ १६ ॥

सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् ।
असिते राक्षसे भाति यथा वा तडिदम्बुदे ॥ १७ ॥

तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् ।
श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८ ॥

पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ।
अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥

इतो द्वीपे समुद्रस्य संपूर्णे शतयोजने ।
तस्मिंल्लङ्कापुरी रम्या निर्मिता विश्वकर्मणा ॥ २० ॥

जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः ।
प्रासादैर्हेमवर्णैश्च महद्भिः सुसमा कृता ॥
प्राकारेणार्कवर्णेन महता सुसमावृता ॥ २१ ॥

तस्यां वसति वैदेही दीना कौशेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ २२ ॥

जनकस्यात्मजां राज्ञस्तत्र द्रक्ष्यथ मैथिलीम् ।
लङ्कायामथ गुप्तायां सागरेण समन्ततः ॥ २३ ॥

संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् ।
आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ॥ २४ ॥

तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ।
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २५ ॥

आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः ।
द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ २६ ॥

भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह ।
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥ २७ ॥

बलवीर्योपपन्नानां रूपयौवनशालिनाम् ।
षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥
वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥ २८ ॥

गर्हितं तु कृतं कर्म येन स्म पिशिताशिना ।
प्रतीकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ॥ २९ ॥

इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ।
अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ॥ ३० ॥

तस्मादाहारवीर्येण निसर्गेण च वानराः ।
आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥ ३१ ॥

अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः ।
विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥ ॥ ३२ ॥

उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ॥ ३३ ॥

अभिगम्य तु वैदेहीं समृद्धार्था भविष्यथ ॥ ३४ ॥

समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् ।
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३५ ॥

ततो नीत्वा तु तं देशं तीरे नदनदीपतेः ।
निर्दग्धपक्षं संपातिं वानराः सुमहौजसः ॥ ३६ ॥

पुनः प्रत्यानयित्वा च तं देशं पतगेश्वरम् ।
बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11537 किष्किन्धाकाण्डे आदितः श्लोकाः 2285

## एकोनषष्टितमः सर्गः ॥ ५९ ॥

### सुपार्श्ववचनानुवादः ॥

ततस्तदमृतास्वादं गृध्रराजेन भाषितम् ।
निशम्य मुदिता हृष्टास्ते वचः प्लवगर्षभाः ॥ १ ॥

जाम्बवान्वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
भूतलात्सहसोत्पत्य गृध्रराजं तमब्रवीत् ॥ २ ॥

क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् ।
तदाख्यातु भवान्सर्वं गतिर्भव वनौकसाम् ॥ ३ ॥

को दाशरथिबाणानां वज्रवेगनिपातिनाम् ।
स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४ ॥

स हरीन्प्रीतिसंयुक्तान्सीताश्रुतिसमाहितान् ।
पुनराश्वासयन्प्रीत इदं वचनमब्रवीत् ॥ ५ ॥

श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् ।
येन चापि ममाख्यातं यत्र चायतलोचना ॥ ६ ॥

अहमस्मिन्गिरौ दुर्गे बहुयोजनमायते ।
चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥

तं मामेवं गतं पुत्रः सुपार्श्वो नाम नामतः ।
आहारेण यथाकालं बिभर्ति पततां वरः ॥ ८ ॥

तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥ ९ ॥

स कदाचित्क्षुधार्तस्य मम चाहारकाङ्क्षिणः ।
गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १० ॥

स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः ।
क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥ ११ ॥

स मामाहारसंरोधात्पीडितं प्रीतिवर्धनः ।
अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२ ॥

अहं तात यथाकालमामिषार्थी खमाप्लुतः ।
महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः ॥ १३ ॥

तत्र सत्त्वसहस्राणां सागरान्तरचारिणाम् ।
पन्थानमेकोऽध्यवसं संनिरोद्धुमवाङ्मुखः ॥ १४ ॥

तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् ।
स्त्रियमादाय गच्छन्वै भिन्नाञ्जनचयोपमः ॥ १५ ॥

सोऽहमभ्यवहारार्थं तौ दृष्ट्वा कृतनिश्चयः ।
तेन साम्ना विनीतेन पन्थानमभियाचितः ॥ १६ ॥

न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् ।
नीचेष्वपि जनः कश्चित्किमङ्ग बत मद्विधः ॥ १७ ॥

स यातस्तेजसा व्योम संक्षिपन्निव वेगितः ।
अथाहं खचरैर्भूतैरभिगम्य सभाजितः ॥ १८ ॥

दिष्ट्या जीवति सीतेति ह्यब्रुवन्मां महर्षयः ।
कथंचित्सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥ १९ ॥

एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः ॥ २० ॥

स च मे रावणो राजा रक्षसां प्रतिवेदितः ।
हरन्दाशरथेर्भार्यां रामस्य जनकात्मजाम् ॥ २१ ॥

भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ।
रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्धजाम् ॥ २२ ॥

एष कालात्ययस्तावदिति कालविदां वरः ।
एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥ २३ ॥

तच्छ्रुत्वाऽपि हि मे बुद्धिर्नासीत्काचित्पराक्रमे ।
अपक्षो हि कथं पक्षी कर्म किंचिदुपक्रमे ॥ २४ ॥

यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना ।
श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम् ॥ २५ ॥

वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः ।
यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः ॥ २६ ॥

ते भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः ।
प्रहिताः कपिराजेन देवैरपि दुरासदाः ॥ २७ ॥

रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः ।
त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे ॥ २८ ॥

कामं खलु दशग्रीवस्तेजोबलसमन्वितः ।
भवतां तु समर्थानां न किञ्चिदपि दुष्करम् ॥ २९ ॥

तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ।
न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥

आदितः श्लोकाः 11567 किष्किन्धाकाण्डे आदितः श्लोकाः 2315

## षष्टितमः सर्गः ॥ ६० ॥
### सम्पातिना स्वस्य वृत्तान्तकथनम् ॥

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
उपविष्टा गिरौ दुर्गे परिवार्य समन्ततः ॥ १ ॥

तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् ।
जनितप्रत्ययो हर्षात्संपातिः पुनरब्रवीत् ॥ २ ॥

कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम ।
तत्त्वं सङ्कीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३ ॥

अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरा वने ।
सूर्यातपपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥

लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव ।
वीक्षमाणो दिशः सर्वा नाभिजानामि किञ्चन ॥ ५ ॥

ततस्तु सागराञ्शैलान्नदीः सर्वाः सरांसि च ।
वनान्युदधिवेलां च समीक्ष्य मतिरागमत् ॥ ६ ॥

हृष्टपक्षिगणाकीर्णः कन्दरान्तरकूटवान् ।
दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः ॥ ७ ॥

आसीच्चात्राश्रमं पुण्यं सुरैरपि सुपूजितम् ।
ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा अभूत् ॥ ८ ॥

अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा विना ।
वसतो मम धर्मज्ञे स्वर्गते तु निशाकरे ॥ ९ ॥

अवतीर्य तु विन्ध्याग्रात्कृच्छ्रेण विषमाच्छनैः ।
तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥

तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् ।
जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११ ॥

तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः ।
वृक्षो नापुष्पितः कश्चिदफलो वा न विद्यते ॥ १२ ॥

उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः ।
द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥ १३ ॥

अथापश्यमदूरस्थमृषिं ज्वलिततेजसम् ।
कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥

तमृक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाः ।
परिवार्योपगच्छन्ति धातारं प्राणिनो यथा ॥ १५ ॥

ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययुः ।
प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥ १६ ॥

ऋषिस्तु दृष्ट्वा मां तत्र प्रविष्टश्चाश्रमं पुनः ।
मुहूर्तमात्रान्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७ ॥

सौम्य वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते ।
अग्निदग्धाविमौ पक्षौ त्वक्चैव व्रणिता तव ॥ १८ ॥

द्वौ गृध्रौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे ।
गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥

ज्येष्ठो हि त्वं तु संपाते जटायुरनुजस्तव ।
मानुषं वपुरास्थाय गृह्णीतां चरणौ मम ॥ २० ॥

किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् ।
दण्डो वाऽयं कृतः केन सर्वमाख्याहि पृच्छतः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षष्टितमः सर्गः ॥

आदितः श्लोकाः 11588 किष्किन्धाकाण्डे आदितः श्लोकाः 2336

## एकषष्टितमः सर्गः ॥ ६१ ॥

स्वपक्षदाहकारणकथनम् ॥

ततस्तद्दारुणं कर्म दुष्करं साहसात्कृतम् ।
आचचक्षे मुनेः सर्वं सूर्यानुगमनं तथा ॥ १ ॥

भगवन्व्रणयुक्तत्वाल्लज्जया त्वाकुलेन्द्रियः ।
परिश्रान्तो न शक्नोमि वचनं प्रतिभाषितुम् ॥ २ ॥

अहं चैव जटायुश्च संघर्षाद्दर्पमोहितौ ।
आकाशं पतितौ वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥

कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् ।
रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४ ॥

अथावां युगपत्प्राप्तावपश्याव महीतले ।
रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५ ॥

क्वचिद्वादित्रघोषांश्च ब्रह्मघोषांश्च शुश्रुवः ।
गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६ ॥

तूर्णमुत्पत्य चाकाशमादित्यपथमास्थितौ ।
आवामालोकयावस्तद्वनं शाद्वलसंस्थितम् ॥ ७ ॥

उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः ।
आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८ ॥

हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः ।
भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९ ॥

तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदाऽऽवयोः ।
समाविशति मोहश्च शोको मूर्च्छा च दारुणा ॥ १० ॥

न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी ।
युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥ ११ ॥

मनश्च मे हतं भूयः संनिवर्त्य तु संश्रयम् ।
यत्नेन महता ब्रह्मन्पुनः संधाय चक्षुषी ॥
यत्नेन महता भूयो रविः समवलोकितः ॥ १२ ॥

तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३ ॥

जटायुर्मामनापृच्छ्य निपपात महीं ततः ।
तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४ ॥

पक्षाभ्यां तु मया गुप्तो जटायुर्नात्यदह्यत ।
प्रमादात्तत्र निर्दग्धः पतन्वायुपथादहम् ॥ १५ ॥

आशङ्के तं निपतितं जनस्थाने जटायुषम् ।
अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६ ॥

राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
सर्वथा मर्तुमेवेच्छन्पतिष्ये शिखराद्गिरेः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे एकषष्टितमः सर्गः ॥

आदितः श्लोकाः 11605 किष्किन्धाकाण्डे आदितः श्लोकाः 2353

## द्विषष्टितमः सर्गः ॥ ६२ ॥

निशाकरेण पक्षप्ररोहावधिनिरूपणम् ॥

एवमुक्त्वा मुनिश्रेष्ठमरुदं दुःखितो भृशम् ।
अथ ध्यात्वा मुहूर्तं तु भगवानिदमब्रवीत् ॥ १ ॥

पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः ।
प्राणाश्च चक्षुषी चैव विक्रमश्च बलं च ते ॥ २ ॥

पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् ।
दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३ ॥

राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।
तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४ ॥

अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति ।
अस्मिन्नर्थे नियुक्तः सन् पित्रा सत्यपराक्रमः ॥ ॥ ५ ॥

नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति ।
राक्षसेन्द्रो जनस्थानादवध्यः सुरदानवैः ॥ ६ ॥

सा च कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली ।
न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी ॥ ७ ॥

परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः ।
यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८ ॥

तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९ ॥

यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः ।
देवत्वं गच्छतोर्वापि तयोरन्नमिदं त्विति ॥ १० ॥

एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः ।
आख्येया राममहिषी त्वया तेभ्यो विहङ्गम ॥ ११ ॥

सर्वथा हि न गन्तव्यमीदृशः क्व गमिष्यसि ।
देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२ ॥

नोत्सहेयमहं कर्तुमद्यैव त्वां सपक्षकम् ।
इहस्थस्त्वं तु लोकानां हितं कार्यं करिष्यसि ॥ १३ ॥

त्वयाऽपि खलु तत्कार्यं तयोश्च नृपपुत्रयोः ।
ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥ १४ ॥

इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेबरम् ॥ १५ ॥
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्विषष्टितमः सर्गः ॥

आदितः श्लोकाः 11621 किष्किन्धाकाण्डे आदितः श्लोकाः 2369

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

संपातिपक्षप्ररोहः वानरप्रस्थानं च ॥

एतैरन्यैश्च बहुभिर्वाक्यैर्वाक्यविशारदः ।
मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स स्वमाश्रमम् ॥ १ ॥
कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः ।
अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २ ॥
अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् ।
देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
मां निर्दहति संतापो वितर्कैर्बहुभिर्वृतम् ॥ ४ ॥
उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये ।
बुद्धिर्या तेन मे दत्ता प्राणसंरक्षणाय तु ॥ ५ ॥
सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः ॥ ६ ॥
बुद्ध्यता च मया वीर्यं रावणस्य दुरात्मनः ।
पुत्रः संतर्जितो वाग्भिर्न त्राता मैथिली कथम् ॥ ७ ॥

तस्या विलपितौ श्रुत्वा तं च सीताविनाकृतौ ।
न मे दशरथस्नेहात्पुत्रेणोत्पादितं प्रियम् ॥ ८ ॥

तस्य त्वेवं ब्रुवाणस्य संपातेर्वानरैः सह ।
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् ॥ ९ ॥

स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ।
प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥ १० ॥

निशाकरस्य राजर्षेः प्रभावादमितात्मनः ।
आदित्यरश्मिनिर्दग्धौ पक्षौ मे पुनरुत्थितौ ॥ ११ ॥

यौवने वर्तमानस्य ममासीद्यः पराक्रमः ।
तमेवाद्यानुगच्छामि बलं पौरुषमेव च ॥ १२ ॥

सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ।
पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ॥ १३ ॥

इत्युक्त्वा स हरीन्सर्वान्संपातिः पतगोत्तमः ।
उत्पपात गिरेः शृङ्गाज्जिज्ञासुः खगमो गतिम् ॥ १४ ॥

तस्य तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ।
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ १५ ॥

अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्धपौरुषाः ।
अभिजिदभिमुखा दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः ॥

आदितः श्लोकाः 11637 किष्किन्धाकाण्डे आदितः श्लोकाः 2385

## चतुःषष्टितमः सर्गः ॥ ६४ ॥

### समुद्रलङ्घनालोचन ॥

आख्याता गृध्रराजेन समुत्पत्य प्लवङ्गमाः ।
सङ्गम्य प्रीतिसंयुक्ता विनेदुर्भीमविक्रमाः ॥ १ ॥

संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् ।
हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥

अभिक्रम्य तु तं देशं ददृशुर्भीमविक्रमाः ।
कृत्स्नं लोकस्य महतः प्रतिबिम्बमिव स्थितम् ॥ ३ ॥

दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ।
संनिवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥ ४ ॥

सत्त्वैर्महद्भिर्विविधैः क्रीडद्भिर्विकृतैर्जले ।
व्यत्यस्तैः सुमहाकायैरूर्मिभिश्च समाकुलम् ॥ ५ ॥

प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ।
क्वचित्पर्वतसङ्काशैर्जलराशिभिरावृतम् ॥ ६ ॥

सङ्कुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ७ ॥

आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुः सहसा सर्वे दुद्रुवुश्च ततस्ततः ॥ ८ ॥

विद्रुतां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात् ।
आश्वासयामास हरीन्भयार्तान्हरिसत्तमः ॥ ९ ॥

तान्विषादेन महता विषण्णान्वानरर्षभान् ।
उवाच मतिमान्काले वालिसूनुर्महाबलः ॥ १० ॥

न विषादे मनः कार्यं विषादो दोषवत्तमः ।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ११ ॥

विषादो यं प्रसहते विक्रमे समुपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १२ ॥

तस्यां रात्र्यां व्यतीतायामङ्गदो वानरर्षभः ।
हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ १३ ॥

सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ।
वासवं परिवार्येव मरुतां वाहिनी स्थिता ॥ १४ ॥

कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ।
अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १५ ॥

ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्याङ्गदः श्रीमान्वाक्यमर्थवदब्रवीत् ॥ १६ ॥

क इदानीं महातेजा लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥ १७ ॥

को वीरो योजनशतं लङ्घयेत प्लवङ्गमाः ।
इमांश्च यूथपान्सर्वान्मोक्षयेत्को महाभयात् ॥ १८ ॥

कस्य प्रसादाद्दारांश्च पुत्रांश्चैव गृहाणि च ।
इतो निवृत्ताः पश्यामः सिद्धार्थाः सुखिनो वयम् ॥ १९ ॥

कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् ।
अभिगच्छेम संहृष्टाः सुग्रीवं च महाबलम् ॥ २० ॥

यदि कश्चित्समर्थो यः सागरप्लवने हरिः ।
स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ २१ ॥

अङ्गदस्य वचः श्रुत्वा न कश्चित्किञ्चिदब्रवीत् ।
स्तिमितेवाभवत्सर्वा तत्र सा हरिवाहिनी ॥ २२ ॥

पुनरेवाङ्गदः प्राह तान्हरीन्हरिसत्तमः ।
सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ॥ २३ ॥

व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ।
न हि वो गमने सङ्गः कदाचित्कस्यचित्कचित् ॥ २४ ॥

ब्रुवध्वं यस्य या शक्तिर्गमने प्लवगर्षभाः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥

आदितः श्लोकाः 11661 किष्किन्धाकाण्डे आदितः श्लोकाः 2409

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

स्वस्वशक्त्याविष्करणम् ॥

अथाङ्गदवचः श्रुत्वा सर्वे ते वानरोत्तमाः ।
स्वं स्वं गतौ समुत्साहमाहुस्तत्र यथाक्रमम् ॥ १ ॥

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवांस्तथा ॥ २ ॥

आबभाषे गजस्तत्र प्लवेयं दशयोजनम् ।
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥ ३ ॥

गवयो वानरस्तत्र वानरांस्तानुवाच ह ।
त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः ॥ ४ ॥

शरभो वानरस्तत्र वानरांस्तानुवाच ह ।
चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः ॥ ५ ॥

वानरांस्तान् महातेजा अब्रवीद्गन्धमादनः ।
योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥ ६ ॥

मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह ।
योजनानां परं षष्टिमहं प्लवितुमुत्सहे ॥ ७ ॥

ततस्तत्र महातेजा द्विविदः प्रत्यभाषत ।
गमिष्यामि न सन्देहः सप्तति योजनान्यहम् ॥ ८ ॥

सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमान् ।
अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः ॥ ९ ॥

तेषां कथयतां तत्र सर्वांस्ताननुमान्य च ।
ततो वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत ॥ १० ॥

पूर्वमस्माकमप्यासीत् कश्चिद्गतिपराक्रमः ।
ते वयं वयसः पारमनुप्राप्ताः स्म सांप्रतम् ॥ ११ ॥

किं तु नैवं गते शक्यमिदं कार्यमुपेक्षितुम् ।
यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२ ॥

सांप्रतं कालभेदेन या गतिस्तां निबोधत ।
नवतिं योजनानां तु गमिष्यामि न संशयः ॥ १३ ॥

तांस्तु सर्वान् हरिश्रेष्ठाञ्जाम्बवान् पुनरब्रवीत् ।
न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४ ॥

मया महाबलेश्चैव यज्ञे विष्णुः सनातनः ।
प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमः ॥ १५ ॥

स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ।
यौवने च तदासीन्मे बलमप्रतिमं परैः ॥ १६ ॥

संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहम् ।
नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति ॥ १७ ॥

अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा ।
अनुमान्य महाप्राज्ञो जाम्बवन्तं महाकपिम् ॥ १८ ॥

अहमेतद्गमिष्यामि योजनानां शतं महत् ।
निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चितम् ॥ १९ ॥

तमुवाच हरिश्रेष्ठो जाम्बवान् वाक्यकोविदः ।
ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम ॥ २० ॥

कामं शतसहस्रं वा न ह्येष विधिरुच्यते ।
योजनानां भवाञ्शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१ ॥

न हि प्रेषयिता तात स्वामी प्रेष्यः कथञ्चन ।
भवताऽयं जनः सर्वः प्रेष्यः प्लवगसत्तम ॥ २२ ॥

भवान्कलत्रमस्माकं स्वामिभावे व्यवस्थितः ।
स्वामी कलत्रं सैन्यस्य गतिरेषा परन्तप ॥
तस्मात्कलत्रवत्तत्र प्रतिपाल्यः सदा भवान् ॥ २३ ॥

अपि चैतस्य कार्यस्य भवान्मूलमरिन्दम ।
मूलमर्थस्य संरक्ष्यमेष कार्यविदां नयः ॥ २४ ॥

मूले हि सति सिध्यन्ति गुणाः पुष्पफलादयः ॥ २५ ॥

तद्भवानस्य कार्यस्य साधने सत्यविक्रम ।
बुद्धिविक्रमसम्पन्नो हेतुरत्र परन्तप ॥ २६ ॥

गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ।
भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २७ ॥

उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महाकपिः ।
प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २८ ॥

यदि नाहं गमिष्यामि नान्ये वानरपुङ्गवाः ।
पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २९ ॥

न ह्यकृत्वा हरिपतेः सन्देशं तस्य धीमतः ।
तत्रापि गत्वा प्राणानां पश्यामि परिरक्षणम् ॥ ३० ॥

स हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः ।
अतीत्य तस्य सन्देशं विनाशो गमने भवेत् ॥ ३१ ॥

तद्यथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः ।
तद्भवानेव दृष्टार्थः सञ्चिन्तयितुमर्हति ॥ ३२ ॥

सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः ।
जाम्बवानुत्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३ ॥

अस्य ते वीर कार्यस्य न किञ्चित्परिहीयते ।
एष सञ्चोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३४ ॥

ततः प्रवीरं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
सञ्चोदयामासहरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः ॥

आदितः श्लोकाः **11697** किष्किन्धाकाण्डे आदितः श्लोकाः **2445**

## षट्षष्टितमः सर्गः ॥ ६६ ॥

समुद्रतरणे जाम्बवता हनुमत्प्रेरणम् ॥

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ॥ १ ॥

वीर वानरलोकस्य सर्वशास्त्रविशारद ।
तूष्णीमेकान्तमाश्रित्य हनुमन् किं न जल्पसि ॥ २ ॥

हनुमन्हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥

अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ।
गरुत्मानिति विख्यात उत्तमः सर्वपक्षिणाम् ॥ ४ ॥

बहुशो हि मया दृष्टः सागरे स महाबलः ।
भुजंगानुद्धरन्पक्षी महावेगो महायशाः ॥ ५ ॥

पक्षयोर्यद्बलं तस्य तावद्भुजबलं तव ।
विक्रमश्चापि वेगश्च न ते तेनावहीयते ॥ ६ ॥

बलं बुद्धिश्च तेजश्च सत्त्वं च हरिसत्तम ।
विशिष्टं सर्वभूतेषु किमात्मानं न बुध्यसे ॥ ७ ॥

आसीदप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ।
अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥

विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ।
अभिशापादभूत्तात वानरी कामरूपिणी ॥ ९ ॥

दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ।
कपित्वे चारुसर्वाङ्गी कदाचित्कामरूपिणी ॥ १० ॥

मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ।
विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥
अचरत्पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ॥ ११ ॥

तस्या वस्त्रं विशालाक्ष्याः पीतरक्तदशं शुभम् ।
स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनैः ॥ १२ ॥

स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ।
स्तनौ च पीनौ सहितौ सुजातं चारु चाननम् ॥ १३ ॥

तां विशालायतश्रोणीं तनुमध्यां यशस्विनीम् ।
दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ॥ १४ ॥

स तां भुजाभ्यां पीनाभ्यां पर्यष्वजत मारुतः ।
मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ॥ १५ ॥

सा तु तत्रैव संभ्रान्ता सुवृत्ता वाक्यमब्रवीत् ॥ १६ ॥

एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १७ ॥

अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।
न त्वां हिंसामि सुश्रोणि मा भूत्ते सुभगे भयम् ॥ १८ ॥

मनसास्मि गतो यत्त्वां परिष्वज्य यशस्विनीम् ।
वीर्यवान् बुद्धिसंपन्नः पुत्रस्तव भविष्यति ॥ १९ ॥

महासत्त्वो महातेजा महाबलपराक्रमः ।
लङ्घने प्लवने चैव भविष्यति हि मत्समः ॥ २० ॥

एवमुक्ता ततस्तुष्टा जननी ते महाकपे ।
गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभम् ॥ २१ ॥

अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्युद्गतो दिवम् ॥ २२ ॥

शतानि त्रीणि गत्वाऽथ योजनानां महाकपे ।
तेजसा तस्य निर्धूतो न विषादं ततो गतः ॥ २३ ॥

तावदापततस्तूर्णमन्तरिक्षं महाकपे ।
क्षिप्तमिन्द्रेण ते वज्रं क्रोधाविष्टेन धीमता ॥ २४ ॥

तदा शैलाग्रशिखरे वामो हनुरभज्यत ॥ २५ ॥

ततो हि नामधेयं ते हनुमानिति कीर्त्यते। ॥ २६ ॥

ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् ।
त्रैलोक्ये भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ॥ २७ ॥

संभ्रान्ताश्च सुराः सर्वे त्रैलोक्ये क्षोभिते सति ।
प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः ॥ २८ ॥

प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ।
अशस्त्रवध्यतां तात समरे सत्यविक्रम ॥ २९ ॥

वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च ।
सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ॥ ३० ॥

स्वच्छन्दतश्च मरणं ते भूयादिति वै प्रभो ॥ ३१ ॥

स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।
मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ॥ ३२ ॥

वयमद्य गतप्राणा भवान्नस्त्रातु सांप्रतम् ।
दाक्ष्यविक्रमसंपन्नः पक्षिराज इवापरः ॥ ३३ ॥

त्रिविक्रमे मया तात सशैलवनकानना ।
त्रिःसप्तकृत्वःपृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३४ ॥

तथा चौषधयोऽस्माभिः सञ्चितादेवशासनात् ।
निष्पन्नममृतं याभिस्तदाऽऽसीन्नो महद्बलम् ॥ ३५ ॥

स इदानीमहं वृद्धः परिहीनपराक्रमः ।
सांप्रतं कालमस्माकं भवान्सर्वगुणान्वितः ॥ ३६ ॥

तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि ।
त्वद्वीर्यं द्रष्टुकामेयं सर्ववानरवाहिनी ॥ ३७ ॥

उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् ।
परा हि सर्वभूतानां हनुमन् या गतिस्तव ॥ ३८ ॥

विषण्णा हरयः सर्वे हनुमन् किमुपेक्षसे ।
विक्रमस्व महावेगो यथा विष्णुस्त्रिविक्रमः ॥ ३९ ॥

ततस्तु वै जाम्बवता प्रचोदितः
प्रतीतवेगः पवनात्मजः कपिः
प्रहर्षयंस्तां हरिवीरवाहिनीं
चकार रूपं महदात्मनस्तदा ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥

आदितः श्लोकाः 11737 किष्किन्धाकाण्डे आदितः श्लोकाः 2485

## सप्तषष्टितमः सर्गः ॥ ६७ ॥

### समुद्रतरणाय हनूमता महेन्द्रशिरारोहणम् ॥

तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् ।
वीर्येणापूर्यमाणं च सहसा वानरोत्तमम् ॥ १ ॥

सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः ।
विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ २ ॥

प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः ।
त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥

संस्तूयमानो हनुमान् व्यवर्धत महाबलः ।
समाविध्य च लांगूलं हर्षाच्च बलमेयिवान् ॥ ४ ॥

तस्य संस्तूयमानस्य सर्वैर्वानरपुङ्गवैः ।
तेजसाऽऽपूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५ ॥

यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे ।
मारुतस्यौरसः पुत्रस्तथा संप्रति जृम्भते ॥ ६ ॥

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।
अम्बरीषमिवादीप्तं विधूम इव पावकः ॥ ७ ॥

हरीणामुत्थितो मध्यात्संप्रहृष्टतनूरुहः ।
अभिवाद्य ततो वृद्धान् हनुमानिदमब्रवीत् ॥ ८ ॥

अरुजत्पर्वताग्राणि हुताशनसखोऽनिलः ।
बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥

तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः ।
मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः ॥ १० ॥

उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम् ।
मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥

बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे ।
समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२ ॥

ममोरुजङ्घवेगेन भविष्यति समुत्थितः ।
समुच्छ्रितमहाग्राहः समुद्रो वरुणालयः ॥ १३ ॥

पन्नगाशनमाकाशे पतन्तं पक्षिसेविते ।
वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४ ॥

उदयात्प्रस्थितं चापि ज्वलन्तं रश्मिमालिनम् ।
अनस्तमितमादित्यमभिगन्तुं समुत्सहे ॥ १५ ॥

ततो भूमिमसंस्पृश्य पुनरागन्तुमुत्सहे ।
प्रवेगेनैव महता भीमेन प्लवगर्षभाः ॥ १६ ॥

उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् ।
सागरं शोषयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७ ॥

पर्वतान् कम्पयिष्यामि प्लवमानः प्लवङ्गमाः ।
हरिष्ये चोरुवेगेन प्लवमानो महार्णवम् ॥ १८ ॥

लतानां विविधं पुष्पं पादपानां च सर्वशः ।
अनुयास्यन्ति मामद्य प्लवमानं विहायसा ॥
भविष्यति हि मे पन्थाः स्वातेः पन्था इवाम्बरे ॥ १९ ॥

चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव वा ।
द्रक्ष्यन्ति निपतन्तं च सर्वभूतानि वानराः ॥ २० ॥

महामेरुप्रतीकाशं मां द्रक्ष्यध्वं प्लवङ्गमाः ।
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् ॥ २१ ॥

विधमिष्यामि जीमूतान्कम्पयिष्यामि पर्वतान् ।
सागरं शोषयिष्यामि प्लवमानः समाहितः ॥ २२ ॥

वैनतेयस्य सा शक्तिर्मम या मारुतस्य वा ॥ २३ ॥

ऋते सुपर्णराजानं मारुतं वा महाजवम् ।
न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ॥ २४ ॥

नूनं नेष्यामि वैदेहीं रामस्य महिषीं प्रियाम् ।
महासंनहनोपेतौ महान्तौ पुरुषर्षभौ ॥
ऋश्यमूकं पुनः शैलं प्लवेयं रामलक्ष्मणौ ॥ २५ ॥

निमेषान्तरमात्रेण निरालम्बनमम्बरम् ।
सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २६ ॥

भविष्यति हि मे रूपं प्लवमानस्य सागरे ।
विष्णोर्विक्रममाणस्य पुरा त्रीन्विक्रमानिव ॥ २७ ॥

बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ॥ २८ ॥

मारुतस्य समो वेगे गरुडस्य समो जवे ।
अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥ २९ ॥

वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः ।
विक्रम्य सहसा हस्तादमृतं तदिहानये ॥ ३० ॥

तेजश्चन्द्राद्धि गृह्णीयां सूर्याद्वा तेज उत्तमम् ।
लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः ॥ ३१ ॥

तमेवं वानरश्रेष्ठं गर्जन्तममितौजसम् ।
प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ॥ ३२ ॥

तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ।
उवाच परिसंहृष्टो जाम्बवान् हरिसत्तमम् ॥ ३३ ॥

वीर केसरिणः पुत्र हनुमन् मारुतात्मज ।
ज्ञातीनां विपुलः शोकस्त्वया तात प्रणाशितः ॥ ३४ ॥

तव कल्याणरुचयः कपिमुख्याः समाहिताः ।
मङ्गलान्यर्थसिद्ध्यर्थं करिष्यन्ति समाहिताः ॥ ३५ ॥

ऋषीणां च प्रसादेन कपिवृद्धमतेन च ।
गुरूणां च प्रसादेन प्लवस्व त्वं महार्णवम् ॥ ३६ ॥

स्थास्यामश्चैकपादेन यावदागमनं तव ।
त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् ॥ ३७ ॥

ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ।
नेयं मम मही वेगं लङ्घने धारयिष्यति ॥ ३८ ॥

एतानीह नगस्यास्य शिलासङ्कटशालिनः ।
शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ॥ ३९ ॥

एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहम् ।
नानाद्रुमविकीर्णेषु धातुनिःष्यन्दशोभिषु ॥ ४० ॥

एतानि मम निष्पेषं पादयोः प्लवतां वराः ।
प्लवतो धारयिष्यन्ति योजनानामितः शतम् ॥ ४१ ॥

तदेवं वानरश्रेष्ठो हनुमानुद्गिरद्वचः ॥ ४२ ॥

ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः ।
आरुरोह गिरिश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ४३ ॥

वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलम् ।
लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् ॥ ४४ ॥

सिंहशार्दूलचरितं मत्तमातङ्गसेवितम् ।
मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसङ्कुलम् ॥ ४५ ॥

महद्भिरुच्छ्रितं शृङ्गैर्महेन्द्रं स महाबलः ।
विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ॥ ४६ ॥

पादाभ्यां पीडितस्तेन महाशैलो महात्मनः ।
ररास सिंहाभिहतो महामत्त इव द्विपः ॥ ४७ ॥

मुमोच सलिलोत्पीडान्विप्रकीर्णशिलोच्चयः ।
वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ॥ ४८ ॥

नागगन्धर्वमिथुनैः पानसंसर्गकर्कशैः ।
उत्पतद्भिश्च विहगैर्विद्याधरगणैरपि ॥ ४९ ॥

त्यज्यमानमहासानुः संनिलीनमहोरगः ।
चलशृङ्गशिलोद्घातस्तदाऽभूत्स महागिरिः ॥ ५० ॥

निःश्वसद्भिस्तदार्तैस्तु भुजङ्गैरर्धनिःसृतैः ।
सपताक इवाभाति स तदा धरणीधरः ॥ ५१ ॥

ऋषिभिस्त्राससंभ्रान्तैस्त्यज्यमानः शिलोच्चयः ।
सीदन्महति कान्तारे सार्थहीन इवाध्वगः ॥ ५२ ॥

स वेगवान्वेगसमाहितात्मा
हरिप्रवीरः पवनात्मजः कपिः ।
मनः समाधाय महानुभावो
जगाम लङ्कां मनसा हनूमान् ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः ॥

आदितः श्लोकाः 11790 किष्किन्धाकाण्डे आदितः श्लोकाः 2538

॥ इति किष्किन्धाकाण्डं समाप्तम् ॥

अस्यानन्तरं सुन्दरकाण्डं भविष्यति । तस्यायमाद्यः श्लोकः ।

ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥

॥ शुभं भूयात् ॥